प्रतिपत्तिसम्भवाच्चैकैका देवता बहुभी रूपैरात्मानं प्रविभज्य बहुषु यागेषु युगपदङ्गभावं गच्छतीति । परैश्च न दृश्यतेऽन्तर्धानादिक्रियायोगादित्युपपद्यते । अनेकप्रतिपत्तेर्दर्शनादित्यस्यापरा व्याख्या – विग्रहवतामपि कर्माङ्गभावचेतनास्वनेका प्रतिपत्तिर्दृश्यते। क्वचिदेकोऽपि विग्रहवाननेकत्र युगपदङ्गभावं गच्छति, यथा बहुभिर्नमस्कुर्वाणैरेको ब्राह्मणो युगन्नमस्क्रियते । तद्वदिहोद्देशपरित्यागात्मकत्वाद्यागस्य विग्रहवतीमप्येकां देवतामुद्दिश्य बहवः स्वं स्वं द्रव्यं युगपत् परित्यक्ष्यन्तीति विग्रहवत्त्वेऽपि देवतानां न किञ्चित् कर्मणि विरुद्ध्यते ।। २७ ।।

**शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम् ।। २८ ।।**

मा नाम विग्रहवत्त्वे देवादीनामभ्युपगम्यमाने कर्मणि कश्चिद् विरोधः प्रसञ्जि । शब्दे तु विरोधः प्रसज्येत । कथम्? औत्पत्तिकं हि शब्दस्यार्थेन सम्बन्धमाश्रित्य 'अनपेक्षत्वाद्' इति वेदस्य प्रामाण्यं स्थापितम् । इदानीं तु विग्रहवती देवताभ्युपगम्यमाना यद्यप्यैश्वर्ययोगाद्युपदनेककर्मसम्बन्धीनि हवींषि भुञ्जीत, तथापि विग्रहयोगादस्मदादिवज्जननमरणवती सेति नित्यस्य शब्दस्य नित्येनार्थेन नित्ये सम्बन्धे प्रतीयमाने यद्वैदिके शब्दे प्रामाण्यं स्थितं तस्य विरोधः स्यादिति चेत्, नायमप्यस्ति विरोधः । कस्मात्? अतः प्रभावात् । अत एव हि वैदिकाच्छब्दाद्देवादिकं जगत् प्रभवति । ननु 'जन्माद्यस्य यतः' (ब्र.१-१-२) इत्यत्र ब्रह्मप्रभवत्वं जगतोऽवनधारितम्, कथमिह शब्दप्रभवत्वमुच्यते? अपिच यदि नाम वैदिकाच्छब्दादस्य प्रभवोऽभ्युपगतः, कथमेतावता विरोधः शब्दे परिहृतः? यावता वसवो रुद्रा आदितय विश्वेदेवा मरुत त्यितेऽर्था अनित्या एवोत्पत्तिमत्त्वात् । तदनित्यत्वे च तद्वाचिनां वैदिकानां वस्वादिशब्दानामनित्यत्वं केन निवार्यते । प्रसिद्धं हि लोके देवदत्तस्य पुत्र उत्पन्ने यज्ञदत्त इति तस्य नाम क्रियत इति । तस्माद् विरोध एव शब्द इति चेत्, न । गवादिशब्दार्थसम्बन्धनित्यत्वदर्शनात् । नहि गवादिव्यक्तीनामुत्पत्तिमत्त्वे तदाकृतीनामप्युत्पत्तिमत्त्वं स्यात्। द्रव्यगुणकर्मणां हि व्यक्तय एवोत्पद्यन्ते नाकृतयः । आकृतिभिश्च शब्दानां सम्बन्धो, न व्यक्तिभिः । व्यक्तीनामानन्त्यात् सम्बन्धग्रहणानुपपत्तेः। व्यक्तिषूत्पद्यमानास्वप्याकृतीनां नित्यत्वान्न गवादिशब्देषु कश्चिद् विरोधो दृश्यते । तथा देवादिव्यक्तिप्रभवाभ्युपगमेऽप्याकृतिनित्यत्वान्न कश्चिद् वस्वादिशब्देषु विरोध इति द्रष्टव्यम् । आकृतिविशेषस्तु देवादीनां मन्त्रार्थवादादिभ्यो विग्रहवत्त्वाद्यवगमादवगन्तव्यः । स्थानविशेषसम्बन्धनिमित्ताश्चेन्द्रादिशब्दाः सेनापत्यादिशब्दवत् । ततश्च यो यस्तत्तत्स्थानमधिरोहति, स स इन्द्रादिशब्दैरभिधीयत इति न दोषो भवति । नचेदं शब्दप्रभवत्वं ब्रह्मप्रभवत्ववदुपादानकारणाभिप्रायेणोच्यते । कथं तर्हि? स्थिते वाचकात्मना नित्ये शब्दे नित्यार्थसम्बन्धिनि शब्दव्यवहारयोग्यार्थव्यक्तिनिष्पत्तिः, अतः प्रभव

इत्युच्यते । कथं पुनरवगम्यते शब्दात्प्रभवति जगद्? इति, प्रत्यक्षानुमानाभ्याम् । प्रत्यक्षं श्रुतिः, प्रामाण्यं प्रत्यनपेक्षत्वात् । अनुमानं स्मृतिः, प्रमाण्यं प्रति सापेक्षत्वात् । ते हि शब्दपूर्वां सृष्टिं दर्शयतः । 'एत इति वै प्रजापतिर्देवतासृजतासृग्रमिति मनुष्यान् दिव इति पितॄंस्तिरःपवित्रमिति ग्रहानाशव इति स्तोत्रं विश्वानीति शस्त्रमभिसौभगेत्यन्याः प्रजाः' इति श्रुतिः । तथान्यत्रापि 'स मनसा वाचं मिथुनं समभवद्' (बृ. १-२-४) इत्यादिना तत्रतत्र शब्दपूर्विका सृष्टिः श्राव्यते । स्मृतिरपि 'अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा । आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः ।।' इति । उत्सर्गोऽप्ययं वाचः सम्प्रदायप्रवर्तनात्मको द्रष्टव्यः । अनादिनिधनाया अन्यादृशस्योत्सर्गस्यासम्भवात् । तथा 'नाम रूपं च भूतानां कर्मणां च प्रवर्तनम् । वेदशब्देभ्य एवादौ निर्ममे च महेश्वरः ।।' (मनु. १-२१) इति । 'सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक् । वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे ।।' इति च । अपिच चिकीर्षितमर्थमनुतिष्ठंस्तस्य वाचकं शब्दं पूर्वं स्मृत्वा पश्चात्तमर्थमनुतिष्ठतीति सर्वेषां नः प्रत्यक्षमेतत् । तथा प्रजापतेरपि स्रष्टुः सृष्टेः पूर्वं वैदिकाः शब्दा मनसि प्रादुर्बभूवुः, पश्चात्तदनुगतानर्थान् ससर्जेति गम्यते । तथाच श्रुतिः 'स भूरिति व्याहरत् स भूमिमसृजत' (तै.ब्रा. २-२-४-२) इत्येवमादिका भूरादिशब्देभ्य एव मनसि प्रादुर्भूतेभ्यो भूरादिलोकान् सृष्टान् दर्शयति । किमात्मकं पुनः शब्दमभिप्रेत्येदं शब्दप्रभवत्वमुच्यते? स्फोटमित्याह । वर्णपक्षे हि तेषामुत्पन्नप्रध्वंसित्वान्नित्येभ्यः शब्देभ्यो देवादिव्यक्तीनां प्रभव इत्यनुपपन्नं स्यात् । उत्पन्नध्वंसिनश्च वर्णाः, प्रत्युच्चारणमन्यथा चान्यथा च प्रतीयमानत्वात् । तथाहि – अदृश्यमानोऽपि पुरुषविशेषोऽध्ययनध्वनिवश्रवणादेव विशेषतो निर्धार्यते, देवदत्तोऽयमधीते, यज्ञदत्तोऽयमधीते इति । नचायं वर्णविषयोऽन्यथात्वप्रत्ययो मिथ्याज्ञानम्, बाधकप्रत्ययाभावात् । नच वर्णेभ्योऽर्थावगतिर्युक्ता । नह्येकैको वर्णोऽर्थं प्रत्यायेत्, व्यभिचारात् । नच वर्णसमुदायप्रत्ययोऽस्ति, क्रमवत्त्वाद् वर्णानाम् । पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितोऽन्त्यो वर्णोऽर्थं प्रत्याययिष्यतीति यद्युच्येत, तन्न । सम्बन्धग्रहणापेक्षो हि शब्दः स्वयं प्रतीयमानोऽर्थं प्रत्याययेद् भूमादिवत् । नच पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितस्यान्त्यवर्णस्य प्रतीतिरस्ति, अप्रत्यक्षत्वात् संस्काराणाम् । कार्यप्रत्यायितैः संस्कारैः सहितोऽन्त्यो वर्णोऽर्थं प्रत्याययिष्यतीति चेत्, न । संस्कारकार्यस्यापि स्मरणस्य क्रमवर्तित्वात् । तस्मात् स्फोट एव शब्दः । स चैकैकवर्णप्रत्ययाहितसंस्कारबीजेऽन्त्यवर्णप्रत्ययजनितपरिपाके प्रत्ययिन्येकप्रत्ययविषयतया झटिति प्रत्यवभासते । नचायमेकप्रत्ययो वर्णविषया स्मृतिः । वर्णानामनेकत्वादेकप्रत्ययविषयत्वानुपपत्तेः । तस्य च प्रत्युच्चारणं प्रत्यभिज्ञायमानत्वान्नित्यत्वम् । भेदप्रत्ययस्य वर्णविषयत्वात् ।

तस्मान्नित्याच्छब्दात् स्फोटरूपादभिधायकात् क्रियाकारकफललक्षणं जगदभिधेयभूतं प्रभवतीति । 'वर्णा एव तु शब्दः' इति भगवानुपवर्षः । ननूत्पन्नप्रध्वंसित्वं वर्णानामुक्तम्, तन्न, त एवेति प्रत्यभिज्ञानात् । सादृश्यात् प्रत्यभिज्ञानं केशादिष्विवेति चेत्, न । प्रत्यभिज्ञानस्य प्रमाणान्तरेण बाधानुपपत्तेः । प्रत्यभिज्ञानामाकृतिनिमित्तमिति चेत्, न । व्यक्तिप्रत्यभिज्ञानात् । यदिहि प्रत्युच्चारणं गवादिव्यक्तिवदन्या, अन्या वर्णव्यक्तयः प्रतीयेरंस्तत आकृतिनिमित्तं प्रत्यभिज्ञानं स्यात् । नत्वेतदस्ति । वर्णव्यक्तय एव हि प्रत्युच्चारणं प्रत्यभिज्ञायन्ते । द्विर्गोशब्द उच्चारित इति हि प्रतिपत्तिर्नतु द्वौ गोशब्दाविति । ननु वर्णा अप्युच्चारणभेदेन भिन्नाः प्रतियन्ते देवदत्तयज्ञदत्तयोरध्ययनध्वनिश्रवणादेव भेदप्रतीतेरित्युक्तम् । अत्राभिधीयते – सति वर्णविषये निश्चिते प्रत्यभिज्ञाने संयोगविभागाभिव्यङ्ग्यत्वाद् वर्णानामभिव्यञ्जकवैचित्र्यनिमित्तोऽयं वर्णविषयो विचित्रः प्रत्ययो न स्वरूपनिमित्तः । अपिच वर्णव्यक्तिभेदवादिनामपि प्रत्यभिज्ञानसिद्धये वर्णाकृतयः कल्पयितव्याः । तासु च परोपाधिको भेदप्रत्यय इत्यभ्युपगन्तव्यम् । तद्वरं वर्णव्यक्तिष्वेव परोपाधिको भेदप्रत्ययः स्वरूपनिमित्तं च प्रत्यभिज्ञानमिति कल्पनालाघवम् । एष एव च वर्णविषयस्य भेदप्रत्ययस्य बाधकः प्रत्ययो यत्प्रत्यभिज्ञानम् । कथं ह्येकस्मिन् काले बहूनामुच्चारयतामेक एव सन् गकारो युगपदनेकरूपः स्यात्? उदात्तश्चानुदात्तश्च स्वरितश्च सानुनासिकश्च निरनुनासिकश्चेति । अथवा ध्वनिकृतोऽयं प्रत्ययभेदो न वर्णकृत इत्यदोषः । कः पुनरयं ध्वनिर्नाम? यो दूरादाकर्णयतो वर्णविवेकमप्रतिपद्यमानस्य कर्णपथमवतरति । प्रत्यासीदतश्च पटुमृदुत्वादिभेदं वर्णेष्वासञ्जयति । तन्निबन्धनाश्चोदात्तादयो विशेषा न वर्णस्वरूपनिबन्धनाः, वर्णानां प्रत्युच्चारणं प्रत्यभिज्ञायमानत्वात् । एवञ्च सति सालम्बना उदात्तादिप्रत्यया भविष्यन्ति । इतरथा हि वर्णानां प्रत्यभिज्ञायमानानां निर्भेदत्वात् संयोगविभागकृता उदात्तादिविशेषाः कल्पेरन् । संयोगविभागानां चाप्रत्यक्षत्वान्न तदाश्रया विशेषा वर्णेष्वध्यवसितुं शक्यन्त इत्यतो निरालम्बना एवैत उदात्तादिप्रत्यया स्युः । अपिच नैवैतदभिनिवेष्टव्यमुदात्तादिभेदेन वर्णानां प्रत्यभिज्ञायमनानां भेदो भवेदिति । नह्यन्यस्य भेदेनान्यस्याभिद्यमानस्य भेदो भवितुमर्हति । नहि व्यक्तिभेदेन जातिं भिन्नां मन्यन्ते । वर्णेभ्यश्चार्थप्रतीतेः सम्भवात् स्फोटकल्पनार्थिका । न कल्पयाम्यहं स्फोटं प्रत्यक्षमेव त्वेनमवगच्छामि, एकैकवर्णग्रहणाहितसंस्कारायां बुद्धौ झटिति प्रत्यवभासादिति चेत्, न । अस्या अपि बुद्धेर्वर्णविषयत्वात् । एकैकवण४ग्रहणोत्तरकाला हीयमेका बुद्धिर्गौरिति समस्तवर्णविषया । नार्थान्तरविषया । कथमेतदवगम्यते? यतोऽस्यामपि बुद्धौ गकारादयो वर्णा अनुवर्तन्ते नतु दकारादयः । यदि ह्यस्या बुद्धेर्गकारादिभ्योऽर्थान्तरं स्फोटो विषयः स्यात्ततो दकारादय

इव गकारादयोऽप्यस्या बुद्धेर्व्यावर्तेरन्, नतु तथास्ति । तस्मादियमेकबुद्धिर्वर्णविषयैव स्मृतिः । नन्वनेकत्वाद् वर्णानां नैकबुद्धिविषयतोपपद्यत इत्युक्तम्, तत्प्रतिब्रूमः । सम्भवत्यनेकस्याप्येकबुद्धिविषयत्वम्, पङ्क्तिर्वनं सेना दश शतं सहस्रमित्यादिदर्शनात् । या तु गौरित्येकोऽयं शब्द इति बुद्धिः । सा बहुष्वेव वर्णेष्वेकार्थावच्छेदनिबन्धनौपचारिकी वनसेनादिबुद्धिवदेव । अत्राह – यदि वर्णा एव सामस्त्येनैकबुद्धिविषयतामापद्यमानाः पदं स्युस्ततो जारा राजा कपिः पिक इत्यादिषु पदविशेषप्रतिपत्तिर्न स्यात् । त एव हि वर्णा इतरत्र चेतरत्र च प्रत्यवभासन्त इति । अत्र वदामः – सत्यपि समस्तवर्णप्रत्यवमर्शे यथा क्रमानुरोधिन्य एव पिपीलिकाः पङ्क्तिबुद्धिमारोहन्ति, एवं क्रमानुरोधिन एव वर्णाः पदबुद्धिमारोक्ष्यन्ति । तत्र वर्णानामविशेषेऽपि क्रमविशेषकृता पदविशेषप्रतिपत्तिर्न विरुद्ध्यते । वृद्धव्यवहारे चेमे वर्णाः क्रमाद्यनुगृहीता गृहीतार्थविशेषसम्बन्धाः सन्तः स्वव्यवहारेऽप्येकैकवर्णग्रहणानन्तरं समस्तप्रत्यवमर्शिन्यां बुद्धौ तादृशा एव प्रत्यवभासमानास्तं तमर्थमव्यभिचारेण प्रत्याययिष्यन्तीति वर्णवादिनो लघीयसी कल्पना । स्फोटवादिनस्तु दृष्टहानिरदृष्टकल्पना च । वर्णाश्चेमे क्रमेण गृह्यमाणाः स्फोटं व्यञ्जयन्ति, स स्फोटोऽर्थं व्यनक्तीति गरीयसी कल्पना स्यात् । अथापि नाम प्रत्युच्चारणमन्येऽन्ये वर्णाः स्युः, तथापि प्रत्यभिज्ञालम्बनभावेन वर्णसामान्यानामवश्याभ्युपगन्तव्यत्वाद्या वर्णेष्वर्थप्रतिपादन प्रक्रिया रचिता, सा सामान्येषु सञ्चारयितव्या । ततश्च नित्येभ्यः शब्देभ्यो देवादिव्यक्तीनां प्रभव इत्यविरुद्धम् ।। २८ ।।

**अत एव च नित्यत्वम् ॥ २९ ॥**

स्वतन्त्रस्य कर्तुरस्मरणादिभिः स्थिते वेदस्य नित्यत्वे देवादिव्यक्तिप्रभवाभ्युपगमेन तस्य विरोधमाशङ्क्य 'अतः प्रभवाद्' इति परिहृत्येदानीम तदेव वेदनित्यत्वं स्थितं द्रढयति । अत एव च नित्यत्वमिति ।। अत एव नियताकृतेर्देवादेर्जगतो वेदशब्दप्रभवत्वाद् वेदशब्दे नित्यत्वमपि प्रत्येतव्यम् । तथाच मन्त्रवर्णः 'यज्ञेन वाचः पदवीयमायन्तामन्वविन्नृषिषु प्रविष्टाम् ।' (ऋ.सं. १०-७१-३) इति स्थितामेव वाचमनुविन्नां दर्शयति । वेदव्यासश्चैवमेव स्मरति 'युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः । लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा ।।' इति ।। २९ ।।

**समाननामरूपत्वाच्च वृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ॥ ३० ॥**

अथापि स्यात् । यदि पश्वादिव्यक्तिवद् देवादिव्यक्तयोऽपि सन्तत्यैवोत्पद्येरन् निरुद्ध्येरंश्च, ततोऽभिधानाभिधेयाभिधातृव्यवहाराविच्छेदात् सम्बन्धनित्यत्वेन विरोधः शब्दे परिहियेत । यदातु खलु सकलं त्रैलोक्यं परित्यक्तनामरूपं निर्लेपं प्रलीयते, प्रभवति, चाभिनवमिति श्रुतिस्मृतिवादा वदन्ति, तदा कथमविरोध इति । तत्रेदमभिधीयते –

समाननामरूपत्वादिति ।। तदापि संसारस्यानादित्वं तावदभ्युपगन्तव्यम् । प्रतिपादयिष्यति चाचार्यः संसारस्यानादित्वम् 'उपपद्यते चाप्युपलभ्यते च' (ब्र. २-१-३६) इति । अनादौ च संसारे यथा स्वापप्रबोधयोः प्रलयप्रभवश्रवणेऽपि पूर्वप्रबोधवदुत्तरप्रबोधेऽपि व्यवहारान्न कश्चिद् विरोधः, एवं कल्पान्तरप्रभवप्रलययोरपीति द्रष्टव्यम् । स्वापप्रबोधयोश्च प्रलयप्रभवौ श्रूयेते 'यदा सुप्तः स्वप्नं न कश्चन पश्यत्यथास्मिन् प्राण एवैकधा भवति तदैनं वाक्सर्वैर्नामभिः सहाप्येति चक्षुः सर्वै रूपैः सहाप्येति श्रोत्रं सर्वैः शब्दैः सहाप्येति मनः सर्वैर्ध्यानैः सहाप्येति स यदा प्रतिबुद्ध्यते यथाऽग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः सर्वे प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः' (कौ. ३-३) इति । स्यादेतत् । स्वापे पुरुषान्तरव्यवहाराविच्छेदात् स्वयंश्च सुप्तप्रबुद्धस्य पूर्वप्रबोधव्यवहारानुसन्धानसम्भवादविरुद्धम् । महाप्रलये तु सर्वव्यवहारोच्छेदाज्जन्मान्तर-व्यवहारवच्च कल्पान्तरव्यवहारस्यानुसन्धातुमशक्यत्वाद् वैषम्यमिति । नैष दोषः । सत्यपि सर्वव्यवहारोच्छेदिनि महाप्रलये परमेश्वरानुग्रहादीश्वराणां हिरण्यगर्भादीनां कल्पान्तरव्यवहारानुसन्धानोपपत्तेः । यद्यपि प्राकृताः प्राणिनो न जन्मान्तरव्यवहारमनुसन्दधाना दृश्यन्त इति, तथापि न प्राकृतवदीश्वराणां भवितव्यम् । तथाहि प्राणित्वविशेषेऽपि मनुष्यादिस्तम्बपर्यन्तेषु ज्ञानैश्वर्यादिप्रतिबन्धः परेण परेण भूयान् भवन् दृश्यते, तथा मनुष्यादिष्वेव हिरण्यगर्भपर्यन्तेषु ज्ञानैश्वर्याद्यभिव्यक्तिरपि परेण परेण भूयसी भवतीत्येतच्छ्रुतिस्मृतिवादेष्वसकृदनुश्रूयमाणं न शक्यं नास्तीति वदितुम् । ततश्चातीतकल्पानुष्ठितप्रकृष्टज्ञानकर्मणामीश्वराणां हिरण्यगर्भादीनां वर्तमानकल्पादौ प्रादुर्भवतां परमेश्वरानुगृहीतानां सुप्तप्रतिबुद्धवत् कल्पान्तर-व्यवहारानुसन्धानोपपत्तिः । तथाच श्रुतिः 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ।।' (श्वे. ६-१८) इति । स्मरन्ति च 'शौनकादयो मधुच्छन्दःप्रभृतिभिर्ऋषिभिर्दाशतय्यो दृष्टाः ।' इति । प्रतिवेदं चैवमेव काण्डर्ष्यादयः स्मर्यन्ते । श्रुतिरप्यृषिज्ञानपूर्वकमेव मन्त्रेणानुष्ठानं दर्शयति – 'यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाध्यापयति वा स्थाणुं वा वर्च्छति गर्तं वा प्रतिपद्यते ।' इत्युपक्रम्य 'तस्मादेतानि मन्त्रे मन्त्रे विद्याद्' इति । प्राणिनां च सुखप्राप्तये धर्मो विधीयते । दुःखपरिहाराय चाधर्मः प्रतिषिद्ध्यते । दृष्टानु-श्रविकसुखदुःखविषयौ च रागद्वेषौ भवतो न विलक्षणविषयावित्यतो धर्माधर्मफलभूतोत्तरा सृष्टिर्निष्पद्यमाना पूर्वसृष्टिसदृश्येव निष्पद्यते । स्मृतिश्च भवति 'तेषां ये यानि कर्माणि प्राक् सृष्ट्यां प्रतिपेदिरे । तान्येव ते प्रपद्यन्ते सृज्यमानाः पुनः पुनः ।। हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मावृतानृते । तद्भाविताः प्रपद्यन्ते तस्मात्तत्तस्य रोचते ।।'

इति । प्रलीयमानमपि चेदं जगच्छक्त्यवशेषमेव प्रलीयते । शक्तिमूलमेव च प्रभवति । इतरथाकस्मिकत्वप्रसङ्गात् । नचानेकाकाराः शक्तयः शक्याः कल्पयितुम् । ततश्च विच्छिद्य विच्छिद्याप्युद्भवतां भूरादिलोकप्रवाहाणाम्, देवतिर्यङ्मनुष्यलक्षणानां च प्राणिनिकायप्रवाहाणाम्, वर्णाश्रमधर्मफलव्यवस्थानां चानादौ संसारे नियतत्वमिन्द्रियविषय सम्बन्धनियतत्ववत् प्रत्येतव्यम् । नहीन्द्रियविषयसम्बन्धादेर्व्यवहारस्य प्रतिसर्गमन्यथात्वं षष्ठेन्द्रियविषयकल्पं शक्यमुत्प्रेक्षितुम् । अतश्च सर्वकल्पानां तुल्यव्यवहारत्वात् कल्पान्तर-व्यवहारानुसन्धानक्षमत्वाच्चेश्वराणां समाननामरूपा एव प्रतिसर्गं विशेषाः प्रादुर्भवन्ति । समाननामरूपत्वाच्चावृत्तावपि महासर्गमहाप्रलयलक्षणायां जगतोऽभ्युपगम्यमानायां न कश्चिच्छब्दप्रामाण्यादिविरोधः । समाननामरूपतां च श्रुतिस्मृतौ दर्शयतः –'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् । दिवं च पृथिवीं चान्तरिक्षमथो स्वः' (ऋ.सं. १०-१९०-३) इति । यथा पूर्वस्मिन् कल्पे सूर्याचन्द्रमःप्रभृति जगत् क्लृप्तम्, तथास्मिन्नपि कल्पे परमेश्वरोऽकल्पयदित्यर्थः । तथा 'अग्निर्वा अकामयत । अन्नादो देवानाꣳस्यामिति । स एतमग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निरवपद्' (तै.ब्रा. ३-१-४-१) इति नक्षत्रेष्टिविधौ योऽग्निर्निरवपद्यस्मै वाग्नये निरवपत्तयोः समाननामरूपतां दर्शयतीत्येवंजातीयका श्रुतिरिहोदाहर्तव्या । स्मृतिरपि – 'ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः । शर्वर्यन्ते प्रसूतानां तान्येवैभ्यो ददात्यजः ।। यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये । दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ।। यथाभिमानिनोऽतीतास्तुल्यास्ते साम्प्रतैरिह । देवा देवैरतीतैर्हि रूपैर्नामभिरेव च ।।' इत्येवञ्जातीयका द्रष्टव्या ।। ३० ।।

**मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॥ ३१ ॥**

इह देवादीनामपि ब्रह्मविद्यायामस्त्यधिकार इति यत् प्रतिज्ञातं तत्पर्यावर्त्यते । देवादीनामनधिकारं जैमिनिराचार्यो मन्यते । कस्मात्? मध्वादिष्वसम्भवात् । ब्रह्मविद्याया मधिकाराभ्युपगमे हि विद्यात्वाविशेषान्मध्वादिविद्यास्वप्यधिकारोऽभ्युपगम्येत । नचैवं सम्भवति । कथम्? 'असौ वा आदित्यो देवमधु' (छा. ३-१-१) इत्यत्र मनुष्या आदित्यं मध्वध्यासेनोपासीरन् । देवादिषु ह्युपासकेष्वभ्युपगम्यमानेष्वादित्यः कमन्यमादित्यमुपासीत। पुनश्चादित्यव्यपाश्रयाणि पञ्च रोहितादीन्यमृतान्युपक्रम्य वसवो रुद्रा आदित्या मरुतः साध्याश्च पञ्च देवगणाः क्रमेण तत्तदमृतमुपजीवन्तीत्युपदिश्य 'स य एतदेवममृतं वेद वसूनामेवैको भूत्वाऽग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तुष्यति' इत्यादिना वस्वाद्युप-जीव्यान्यमृतानि विजानतां वस्वादिमहिमप्राप्तिं दर्शयति । वस्वादयस्तु कानन्यान् वस्वादीनमृतोपजीविनो विजानीयुः । कं वान्यं वस्वादिमहिमानं प्रेप्सेयुः । तथा अग्निः पादो वायुः पाद आदित्यः पादो दिशः पादः' (छा.३-१८-२), 'वायुर्वाव

संवर्गः'(छा.४-३-१) 'आदित्यो ब्रह्मेत्यादेशः' (छा. ३-११-१) इत्यादिषु देवतात्मोपासनेषु न तेषामेव देवतात्मनामधिकारः सम्भवति । तथा 'इमावेव गौतमभरद्वाजावयमेव गौतमोऽयं भरद्वाजः' (बृ. २-२-४) इत्यादिष्वप्यृषिसम्बन्धेषूपासनेषु न तेषामेवर्षीणामधिकारः सम्भवति ।। ३१ ।।

कुतश्च देवादीनामनधिकारः?

**ज्योतिषि भावाच्च ॥ ३२ ॥**

यदिदं ज्योतिर्मण्डलं द्युस्थानमहोरात्राभ्यां बम्भ्रमज्जगदवभासयति तस्मिन्नादित्यादयो देवतावचनाः शब्दाः प्रयुज्यन्ते । लोकप्रसिद्धेर्वाक्यशेषप्रसिद्धेश्च । नच ज्योतिर्मण्डलस्य हृदयादिना विग्रहेण चेतनतयार्थित्वादिना वा योगोऽवगन्तुं शक्यते मृदादिवद-चेतनत्वावगमात् । एतेनाग्न्यादयो व्याख्याताः । स्यादेतत् । मन्त्रार्थवादेतिहासपुराणलोकेभ्यो देवादीनां विग्रहवत्त्वाद्यवगमादयमदोष इति । नेत्युच्यते । नहि तावल्लोको नाम किञ्चित् स्वतन्त्रं प्रमाणमस्ति । प्रत्यक्षादिभ्य एव ह्यविचारितविशेषेभ्यः प्रमाणेभ्यः प्रसिद्ध्यन्नर्थो लोकात् प्रसिद्ध्यतीत्युच्यते । नचात्र प्रत्यक्षादीनामन्यतमं प्रमाणमस्ति । इतिहासपुराणमपि पौरुषेयत्वात् प्रमाणान्तरमूलमाकाङ्क्षति । अर्थवादा अपि विधिनैकवाक्यत्वात् स्तुत्यर्थाः सन्तो न पार्थगर्थ्येन देवादीनां विग्रहादिसद्भावे कारणाभावं प्रतिपद्यन्ते । मन्त्रा अपि श्रुत्यादिविनियुक्ताः प्रयोगसमवायिनोऽभिधानार्था न कस्यचिदर्थस्य प्रमाणमित्याचक्षते । तस्मादभावो देवादीनामधिकारस्य ।। ३२ ।।

**भावं तु बादरायणोऽस्ति हि ॥ २३ ॥**

तुशब्दः पूर्वपक्षं व्यावर्तयति । बादरायणस्त्वाचार्यो भावमधिकारस्य देवादीनामपि मन्यते । यद्यपि मध्वादिविद्यासु देवतादिव्यामिश्रास्वसम्भवोऽधिकारस्य तथाप्यस्ति हि शुद्धायां ब्रह्मविद्यायां सम्भवः । अर्थित्वसामर्थ्याप्रतिषेधाद्यपेक्षत्वादधिकारस्य । नच क्वचिदसम्भव इत्येतावता यत्र सम्भवस्तत्राप्यधिकारोऽपोद्येत । मनुष्याणामपि न सर्वेषां ब्राह्मणादीनां सर्वेषु राजसूयादिष्वधिकारः सम्भवति । तत्र यो न्यायः सोऽत्रापि भविष्यति । ब्रह्मविद्यां च प्रकृत्य भवति दर्शनं श्रौतं देवाद्यधिकारस्य सूचकम् –'तद्यो यो देवानां प्रत्यबुद्ध्यत, स एव तदभवत्तथर्षीणां तथा मनुष्याणाम्' (बृ. १-४-१०) इति । 'ते होचुर्हन्त तमात्मानमन्विच्छामो यमात्मानमन्विष्य सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्' इति । 'इन्द्रो ह वै देवानामभिप्रवव्राज विरोचनोऽसुराणाम्' (छा. ८-७-२) इत्यादि च । स्मार्तमपि गन्धर्वयाज्ञवल्क्यसंवादादि । यदप्युक्तं ज्योतिषि भावाच्चेति । अत्र ब्रूमः – ज्योतिरादिविषया अपि आदित्यादयो देवतावचनाः शब्दाश्चेतनावन्त-

मैश्वर्याद्युपेतं तं देवतात्मानं समर्पयन्ति, मन्त्रार्थवादादिषु तथा व्यवहारात् । अस्ति ह्यैश्वर्ययोगाद्देवतानां ज्योतिराद्यात्मभिश्चावस्थातुं यथेष्टं च तं तं विग्रहं ग्रहीतं सामर्थ्यम् । तथाहि श्रूयते सुब्रह्मण्यार्थवादे – मेधातिथेर्मेषेति । 'मेधातिथिं ह काण्वायनमिन्द्रो मेषो भूत्वा जहार' (षड्विंश.ब्रा. १-१) इति । स्मर्यते च 'आदित्यः पुरुषो भूत्वा कुन्तीमुपजगाम ह ।' इति । मृदादिष्वपि चेतना अधिष्ठातारोऽभ्युपगम्यन्ते, मृदब्रवीदापोऽब्रुवन्नित्यादिदर्शनात् । ज्योतिरादेस्तु भूतधातोरादित्यादिष्व-चेतनत्वमभ्युपगम्यते । चेतनास्त्वधिष्ठातारो देवतात्मानो मन्त्रार्थवादादिव्यवहारादित्युक्तम्। यदप्युक्तं मन्त्रार्थवादयोरन्यार्थत्वान्न देवताविग्रहादिप्रकाशनसामर्थ्यमिति । अत्र ब्रूमः – प्रत्ययाप्रत्ययौ हि सद्भावासदभावयोः कारणम्, नान्यार्थत्वमनन्यार्थत्वं वा । तथाह्यन्यार्थमपि प्रस्थितः पथि पतितं तृणपर्णाद्यस्तीत्येव प्रतिपद्यते । अत्राह – **विषम उपन्यासः** । तत्र हि तृणपर्णादिविषयं प्रत्यक्षं प्रवृत्तमस्ति येन तदस्तित्वं प्रतिपद्यते । अत्र पुनर्विध्युद्देशैकवाक्यभावेन स्तुत्यर्थेऽर्थवादे न पार्थगर्थ्येन वृत्तान्तविषया प्रवृत्तिः शक्याऽध्यवसातुम् । नहिर महावाक्येऽर्थप्रत्यायकेऽवान्तरवाक्यस्य पृथक् प्रत्यायकत्वमस्ति। यथा 'न सुरां पिबेद्' इति नञ्वति वाक्ये पदत्रयसम्बन्धात् सुरापानप्रतिषेध एवैकोऽर्थोऽवगम्यते । न पुनः सुरां पिबेदिति पदद्वयसम्बन्धात् सुरापानविधिरपीति । अत्रोच्यते–विषम उपन्यासः । युक्तं यत्सुरापानप्रतिषेधे पदान्वयस्यैकत्वादवान्तर-वाक्यार्थस्याग्रहणम् । विध्युद्देशार्थवादयोस्त्वर्थवादस्थानि पदानि पृथगन्वयं वृत्तान्तविषयं प्रतिपद्यानन्तरं कैमर्थ्यवशेन कामं विधेः स्तावकत्वं प्रतिपद्यन्ते । यथाहि –'वायव्यं श्वेतमालभेत भूतिकामः' इत्यत्र विध्युद्देशवर्तिनां वायव्यादिपदानां विधिना सम्बन्धः, नैवं 'वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति, स एवैनं भूतिं गमयति' इत्येषामर्थवादगतानां पदानाम् । नहि भवति वायुर्वा आलभेतेति क्षेपिष्ठा देवता वा आलभेतेत्यादि । वायुस्वभावसङ्कीर्तनेन त्ववान्तरमन्वयं प्रतिपद्यैवं विशिष्टदैवत्यमिदं कर्मेति विधिं स्तुवन्ति । तद्यत्र सोऽवान्तरवाक्यार्थः प्रमाणान्तरगोचरो भवति, तत्र तदनुवादेनार्थवादः प्रवर्तते । यत्र प्रमाणान्तरविरुद्धस्तत्र गुणवादेन । यत्रतु तदुभयम्, नास्ति तत्र किं प्रमाणान्तराभावाद्गुणवादः स्यादाहोस्वित् प्रमाणान्तराविरोधाद् विद्यमानवाद इति प्रतीतिशरणैर्विद्यमानत्वाद् आश्रयणीयो न गुणवादः । एतेन मन्त्रो व्याख्यातः । अपिच विधिभिरेवेन्द्रादिदैवत्यानि हवींषि चोदयद्भिरपेक्षितमिन्द्रादीनां स्वरूपम् । नहि स्वरूपरहिता इन्द्रादयश्चेतस्यारोपयितुं शक्यन्ते । नच चेतस्यानारूढायै तस्यै तस्यै देवतायै हविः प्रदातुं शक्यते । श्रावयति च – 'यस्यै देवतायै हविर्गृहीतं स्यात्, तां ध्यायेद्, वषट् करिष्यन्' (ऐ.ब्रा. ३-८-१) इति । नच शब्दमात्रमर्थस्वरूपं सम्भवति, शब्दार्थयोर्भेदात् । तत्र यादृशं मन्त्रार्थवादयोरिन्द्रादीनां स्वरूपमवगतम्, न तत् तादृशं

ಮಂತ್ರಭಾಗವು ಅನುಷ್ಠೇಯವಾದ ದೇವತಾದಿಗಳ ಪ್ರಕಾಶನಾದಿಗಳಲ್ಲಿ ತಾತ್ಪರ್ಯವುಳ್ಳದ್ದಾಗಿದೆ. ಅರ್ಥವಾದ ಭಾಗವು ಸ್ತುತಿಪರವಾಗಿದೆ. ವಿಧಿಭಾಗವು ವಿಧೇಯವಾದ ಅರ್ಥಪರವಾಗಿದೆ. ಒಟ್ಟಾರೆ ವೇದದಲ್ಲಿರುವ ಯಾವುದೇ ವಾಕ್ಯವೂ ಕೂಡ ದೇವತೆಗಳ ಶರೀರವನ್ನು ಪ್ರತಿಪಾದನೆ ಮಾಡುತ್ತಿಲ್ಲವೆಂದಂತಾಯಿತು. ಹಾಗಾಗಿ ದೇವತೆಗಳಿಗೆ ಚಿದ್ರೂಪವಾದ ಶರೀರವಿರುವುದಿಲ್ಲ ಹೊರತಾಗಿ ಅರ್ಥಾವಚ್ಛಿನ್ನವಾದ ಶಬ್ದವೆಂಬುದನ್ನೋ, ಅಥವಾ ಶಬ್ದವಿಶಿಷ್ಟವಾದ ಅರ್ಥ ಎಂಬುದನ್ನೋ? ದೇವತೆಗಳ ಶರೀರವೆನ್ನಬೇಕು. ಇದು ಜಡಭೂತವಾಗಿದೆ. ಇಂತಹ ಜಡವಾದ ದೇವತೆಗೆ ಬ್ರಹ್ಮವಿದ್ಯೆಯ ಅಧ್ಯಯನದಲ್ಲಿ ಅಧಿಕಾರವನ್ನು ಹೇಳುವುದಂತೂ ಹೇಗೆ ಸಾಧ್ಯ ? ಹಾಗಾಗಿ ಜಡಭೂತರಾದ ದೇವತೆಗಳಿಗೆ ಸಾಮರ್ಥ್ಯವಿಲ್ಲದ ಕಾರಣ ವೇದವಿದ್ಯಾಧಿಕಾರವಿಲ್ಲವೆಂದು ಪೂರ್ವಪಕ್ಷ.

ಮಂತ್ರ ಮೊದಲಾದ ವೇದ ಭಾಗಗಳು ದೇವತೆಗಳ ಚಿದ್ರೂಪ ಶರೀರವನ್ನೇ ಪ್ರತಿಪಾದನೆ ಮಾಡುತ್ತಿದೆ. ಅಂತಹ ಚಿದ್ರೂಪರಾದ ದೇವತೆಗಳಿಗೆ ವೇದವಿದ್ಯಾಧಿಕಾರವನ್ನು ಹೇಳುವುದು ನ್ಯಾಯಸಮ್ಮತವಾಗಿದೆಯೆಂಬುದು ಮೊದಲನೆಯ ಸೂತ್ರದ ಸಿದ್ಧಾಂತ.

---

शब्दप्रमाणकेन प्रत्याख्यातुं युक्तम् । इतिहासपुराणमपि व्याख्यातेन मार्गेण सम्भवन् मन्त्रार्थवादमूलत्वात् प्रभवति देवताविग्रहादि साधयितुम् । प्रत्यक्षादिमूलमपि सम्भवति । भवति ह्यस्माकमप्रत्यक्षमपि चिरन्तनानां प्रत्यक्षम् । तथाच व्यासादयो देवादिभिः प्रत्यक्षं व्यवहरन्तीति स्मर्यते । यस्तु ब्रूयादिदानीन्तनानामिव पूर्वेषामपि नास्ति, देवादिभिर्व्यवहर्तुं सामर्थ्यमिति स जगद्वैचित्र्यं प्रतिषेधेत् । इदानीमिव च नान्यदपि सार्वभौमः क्षत्रियोऽस्तीति ब्रूयात् । ततश्च राजसूयादिचोदनाः उपरुन्ध्यात् । इदानीमिव च कालान्तरेऽप्यव्यवस्थितप्रायान् वर्णाश्रमधर्मान् प्रतिजानीत । ततश्च व्यवस्थाविधायि शास्त्रमनर्थकं स्यात् । तस्माद्धर्मोत्कर्षवशाच्चिरन्तना देवादिभिः प्रत्यक्षं व्यवजह्रुरिति श्लिष्यते । अपिच स्मरन्ति – 'स्वाध्यायदिष्टदेवतासम्प्रयोगः' (यो.सू. २-४४) इत्यादि । योगोऽप्यणिमाद्यैश्वर्यप्राप्तिफलः स्मर्यमाणो न शक्यते साहसमात्रेण प्रत्याख्यातुम् । श्रुतिश्च योगमाहात्म्यं प्रख्यापयति –'पृथिव्यप्तेजोऽनिलखे समुत्थिते पञ्चात्मके योगगुणे प्रवृत्ते । न तस्य रोगो न जरा न मृत्युः प्राप्तस्य योगाग्निमयं शरीरम् ।' (श्वे. २-१२) इति । ऋषीणामपि मन्त्रब्राह्मणदर्शिनां सामर्थ्यं नास्मदीयेन सामर्थ्येनोपमातुं युक्तम् । तस्मात् समूलमितिहासपुराणम् । लोकप्रसिद्धिरपि न सति सम्भवे निरालम्बनाध्यवसातुं युक्ता । तस्मादुपपन्नो मन्त्रादिभ्यो देवादीनां विग्रहवत्त्वाद्यवगमः । ततश्चार्थित्वादि-सम्भवादुपपन्नो देवादीनामपि ब्रह्मविद्यायामधिकारः । क्रममुक्तिदर्शनान्यप्येवमेवोपपद्यन्ते ॥३३॥

ದೇವತಾಧಿಕರಣ (೧-೩-೮)

**तन्न । पूर्वसूत्रस्थमनुष्यपदेनेह तत्सजातीयचेतनान्तर एवानधिकारशङ्कोदयेना-चेतनानधिकारपूर्वपक्षस्यासङ्गतेः ।[१]**

(१)रामानुजभाष्यम् –

**तदुपर्यपि बादरायणः सम्भवात् ॥ २५ ॥**

परस्य ब्रह्मणोऽङ्गुष्ठप्रमितत्वोपपत्तये मनुष्याधिकारं ब्रह्मोपासनशास्त्रमित्युक्तम् । तत्प्रसङ्गेनेदानीं ब्रह्मविद्यायां देवादीनामप्यधिकारोऽस्ति, नास्तीति विचार्यते । किं तावद् युक्तम्? नास्ति देवादीनामधिकार इति । कुतः? सामर्थ्याभावात्, नह्यशरीराणां देवादीनां विवेकविमोकादिसाधनसप्तकानुगृहीतब्रह्मोपासनोपसंहारसामर्थ्यमस्ति । नच देवादीनां सशरीरत्वे प्रमाणमुपलभामहे । यद्यपि परिनिष्पन्नेऽपि वस्तुनि व्युत्पत्तिसम्भावनया वेदान्तवाक्यानि परे ब्रह्मणि प्रमाणभावमनुभवन्ति । तथापि देवादीनां विग्रहवत्त्वप्रतिपादनपरं न किञ्चिदपि वाक्यमुपलभ्यते । मन्त्रार्थवादास्तु कर्मविशेषतयाऽन्यपरत्वान्न देवादिविग्रहसाधने प्रभवन्ति । कर्मविधयश्च स्वापेक्षितोद्देश्यकारकत्वातिरेकि देवतागतं किमपि न साधयन्ति । अत एव तासामर्थित्वमपि न सम्भवति। अतः सामर्थ्यार्थित्वयोरभावाद्देवादीनामनधिकार इत्येवंप्राप्ते ब्रूमः – **तदुपर्यपि बादरायणः सम्भवात् ॥** तद् ब्रह्मोपासनम् उपरि देवादिष्वपि सम्भवतीति भगवान् बादरायणो मन्यते, तेषामर्थित्वसामर्थ्ययोस्सम्भवात् । अर्थित्वं तावदाध्यात्मिकादिदुर्विषहदुःखाभितापात् परस्मिन् ब्रह्मणि च निरस्तनिखिलदोषगन्धेऽनवधिकातिशयासङ्ख्येयकल्याणगुणगणे निरतिशयभोग्यत्वादिज्ञानाच्च सम्भवति । सामर्थ्यमपि पटुतरदेहेन्द्रियादिमत्तया सम्भवति। देहेन्द्रियादिमत्त्वं च ब्रह्मादीनां सकलोपनिषत्सु सृष्टिप्रकरणेषूपासनप्रकरणेषु च श्रूयते । तथाहि 'सदेव सोम्येदमग्र आसीत्' 'तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत' इत्यारभ्य सर्वमचेतनं तेजोबन्नप्रमुखावस्थाविशेषवद् व्याकृत्य 'अनेन जीवेनाऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इति सङ्कल्प्य ब्रह्मादिस्थावरान्तं चतुर्विधं भूतजातं तत्तत्कर्मोचितशरीरं तदुचितनामभाक् चायमकरोदित्युक्तम् । एवं सर्वत्र सृष्टिवाक्येषु देवतिर्यङ्मनुष्यस्थावरात्मना चतुर्विधा सृष्टिराम्नायते । देवादिभेदश्च तत्तत्कर्मानुगुणब्रह्मलोकप्रभृतिचतुर्दशलोकस्थफलभोगयोग्यदेहेन्द्रियादियोगायतः, आत्मनां स्वतो देवादित्वाभावात् । तथा 'तद्धोभये देवासुरा अनुबुबुधिरे ते होचुःइन्द्रो ह वै देवानामभिप्रवव्राज विरोचनोऽसुराणां तौ हासंविदानावेव समित्पाणी प्रजापतिसकाशमाजग्मतुः' 'तौ ह द्वात्रिंशतं वर्षाणि ब्रह्मचर्यमूषतुः । तौ ह प्रजापतिरुवाच' इत्यादिना स्पष्टमेव शरीरेन्द्रियवत्त्वं देवादीनां प्रतीयते । कर्मविधिविशेषभूत-मन्त्रार्थवादेष्वपि 'वज्रहस्तः पुरन्दरः' 'तेनेन्द्रो वज्रमुदयच्छत्' इत्यादिभिः प्रतीयमानं

विग्रहादिमत्त्वं प्रमाणान्तराविरुद्धं तत्प्रमेयमेव । नचानुष्ठेयार्थप्रकाशनस्तुतिपरत्वाभ्यां प्रतीयमानार्थान्तरविवक्षा शक्यते वक्तुम्, स्तुत्याद्युपयोगित्वात्तेन विना स्तुत्याद्यनुपपत्तेश्च। गुणकथनेन हि स्तुतित्वम् । गुणानामसद्भावे स्तुतित्वमेव हीयेत । नचासता गुणेन कथितेन प्ररोचना जायते । अतः कर्म प्ररोचयन्तो गुणसद्भावं बोधयन्त एवार्थवादाः । मन्त्राश्च कर्मसु विलनियुक्तास्तत्र तत्र किञ्चित्करत्वायानुष्ठेयमर्थं प्रकाशयन्तो देवतादिगत-विग्रहादिगुणविशेषमभिदधत एव तत्र किञ्चित् कुर्वन्ति, अन्यथेन्द्रदिस्मृत्यनुपपत्तेः । नचनिर्विशेषा देवता धियमधिरोहति । तत्र प्रमाणान्तरप्राप्तान् गुणान् स्वयमेव बोधयित्वा तैः कर्म प्ररोचयन्ति । गुणविशिष्टं वा प्रकाशयन्ति । प्राप्तांश्चानूद्य तैः प्ररोचनप्रकाशे कुर्वन्ति । विरुद्धत्वे तु तद्वाचिभिश्शब्दैरविरुद्धान् गुणान् लक्षयित्वा कुर्वन्ति । कर्मविधेश्च देवताया ऐश्वर्यमपेक्षितमेव । कामिनः कर्तव्यतया कर्म विधीयमानं स्वयं क्षणप्रध्वंसि कालान्तरभाविनः फलस्य स्वर्गादेस्साधकमपेक्षते । मन्त्रार्थवादयोश्च 'वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति' 'यदनेन हविषाऽशास्ते तदश्यात्तदृध्यात्तदस्मै देवा राधन्ताम्' इत्यादिषु देवतायाः कर्मणाऽराधितायाः फलदायित्वं तदनुगुणं चैश्वर्यं प्रतीयमानमपेक्षितत्वेन वाक्यार्थे समन्वीयते । देवपूजाभिधायिनो यजिधातोश्च यागाख्यं कर्म स्वाराध्यदेवताप्रधानं प्रतीयते । तदेवं कृत्स्नवाक्यपर्यालोचनया वाक्यादेव विध्यपेक्षितं सर्वमवगतमिति नापूर्वादिकं व्युत्पत्तिसमयानवगतं कर्मविधिष्वभिधेयतया कल्प्यतया वाऽश्रयितव्यम् । तथा सङ्कीर्णब्राह्मणमन्त्रार्थवादमूलेषु धर्मशास्त्रेतिहासपुराणेषु ब्रह्मादीनां देवासुरप्रभृतीनां च देहेन्द्रियादयस्स्वभावभेदाः स्थानानि भोगाः कृत्यानि चेत्येवमादयस्सुव्यक्ताः प्रतिपाद्यन्ते । अतो विग्रहादिमत्त्वाद्देवानामप्य-धिकारोऽस्त्येव ॥ २५ ॥

**विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ २६ ॥**

देवादीनां विग्रहादिमत्त्वाभ्युपगमे कर्मणि विरोधः प्रसज्यते, बहुषु यागेषु युगपदेकस्येन्द्रस्य विग्रहवत्त्वे 'अग्निमग्न आवह' 'इन्द्रागच्छ हरिव आगच्छ' इत्यादिना आहूतस्य तस्य सन्निधानानुपपत्तेः । दर्शयति चाग्न्यादीनां तत्र तत्रागमनं 'कस्य वाह देवा यज्ञमागच्छन्ति कस्य वा न बहूनां यजमानानां यो वै देवताः पूर्वः परिगृह्णाति स एनाः । श्वोभूते यजते' इति । अतो विग्रहादिमत्त्वे कर्मणि विरोधः प्रसज्यत इति चेत्, तन्न । अनेकप्रतिपत्तेर्दर्शनात्, दृश्यते हि सौभरिप्रभृतीनां शक्तिमतां युगपदनेकशरीरप्रतिपत्तिः ॥ २६ ॥

**शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम् ॥ २७ ॥**

विरोध इति वर्तते । मा भूत् कर्मणि विरोधोऽनेकशरीरप्रतिपत्तेः । शब्देतु वैदिके विरोधः प्रसज्यते, अनित्यार्थसंयोगात् । विग्रहवत्त्वे हि सावयवत्वेनेन्द्रादेरर्थस्यानित्यत्वम-

निवार्यम् । ततो देवदत्तादिशब्ददिन्द्राद्यर्थजन्मनः प्राग् विनाशादूर्ध्वचेन्द्रदिशब्दानां **वैदिकानामर्थशून्यत्वमनित्यत्वं वा वेदस्य स्यादिति चेत्, तन्न । अतः प्रभवात्** अस्मादिन्द्रादिशब्दादेव पुनःपुनरिन्द्राद्यर्थस्य प्रभवात् । एतदुक्तं भवति, नहि देवदत्तादिशब्दवदिन्द्रादिशब्दा वैदिका व्यक्तिविशेषमात्रे सङ्केतपूर्वकाः प्रवृत्ताः । अपितु स्वभावत एव गवादिशब्दवदाकृतिविशेषवाचित्वेन । ततश्चैकस्यामिन्द्रव्यक्तौ विनष्टायामत एव वैदिकादिन्द्रिशब्दान्मनसि विपरिवर्तमानादवगततद्वाच्यभूतेन्द्राद्यर्थकारो धाता तदाकारमेवापरमिन्द्रं सृजति । यथा कुलालो घटशब्दान्मनसि विपरिवर्तमानात्तदाकारमेव घटम् इति । कथमिदमवगम्यते? प्रत्यक्षानुमानाभ्याम्, श्रुतिस्मृतिभ्यामित्यर्थः । श्रुतिस्तावद् 'वेदेन रूपे व्याकरोत् सतासती प्रजापतिः' इति । तथा 'स भूरिति व्याहृत् स भूमिमसृजत स भुव इति व्याहरत् सोऽन्तरिक्षमसृजत' इत्यादि । वाचकशब्दपूर्वकं तत्तदर्थसंस्थानं स्मरन् तत्तत्संस्थानविशिष्टं तं तमर्थं सृष्टवानित्यर्थः । स्मृतिरपि 'अनादिनिधना ह्येषा वागुत्सृष्टा स्वयम्भुवा । आदौ वेदमयी दिव्या यतस्सर्वाः प्रसूतयः ।।' इति 'सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक् । वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे ।।' इति । संस्थाः संस्थानानि रूपाणीति यावत् । तथा वनामरूपं च भूतानां कृत्यानां च प्रपञ्चनम् । वेदशब्देभ्य एवादौ देवादीनां चकार सः ।।' इति । अतो देवादीनां विग्रहवत्त्वेऽपि वैदिकशब्दानामानर्थक्यं वेदस्यादिमत्त्वं च न प्रसज्यते ।। २७ ।।

**अत एव च नित्यत्वम् ।। २८ ।।**

यत एवेन्द्रवसिष्ठादिशब्दानां देवर्षिवाचिनां तत्तदाकारवाचित्वम्, तत्तच्छब्देन तत्तदर्थस्मृतिपूर्विका च तत्तदर्थसृष्टिः, तत एव 'मन्त्रकृतो वृणीते' 'नम ऋषिभ्यो मन्त्रकृद्भ्यः' (तै.आ. ४-१) 'अयं सोऽग्निरिति विश्वामित्रस्य सूक्तं भवति' इत्यादिभिर्वसिष्ठादीनां मन्त्रकृत्वकाण्डकृत्वऋषित्वादौ प्रतीयमानेऽपि वेदस्य नित्यत्वमुपपद्यते । एभिरेव 'मन्त्रकृतो वृणीते' इत्यादिभिर्वेदशब्दैस्तत्तत्काण्डसूक्तमन्त्र-कृतामृषीणामाकृतिशक्त्यादिकं परामृश्य तत्तदाकारान् तत्तच्छक्तियुक्तांश्च सृष्ट्वा प्रजापतिस्तानेव तत्तन्मन्त्रादिकरणे नियुङ्क्ते । तेऽपि प्रजापतिना आहितशक्तयस्तत्तदनुगुणं तपस्तप्त्वा नित्यसिद्धान् पूर्वपूर्ववसिष्ठादिदृष्टान् तानेव मन्त्रादीननधीत्यैव स्वरतो वर्णतश्चास्खलितान् पश्यन्ति । अतश्च वेदानां नित्यत्वमेषां च मन्त्रकृत्त्वमुपपद्यते ।।२८।।

अथ स्यात्, नैमित्तिकप्रलयादिष्विन्द्राद्युत्पत्तौ वेदशब्देभ्यः पूर्वपूर्वेन्द्रादिस्मरणेन प्रजापतिना देवादिसृष्टिरुपपद्यतां नाम । प्राकृतप्रलये तु स्रष्टुः प्रजापतेर्भूताद्यहङ्कारपरिणामशब्दस्य च विनष्टत्वात् कथं प्रजापतेश्शब्दपूर्विका सृष्टिरुपपद्यते? कथन्तरां विनष्टस्य वेदस्य

नित्यत्वम्? अतो वेदनित्यत्ववादिना देवादीनां विग्रहवत्त्वाभ्युपगमेऽपि लोकव्यवहारस्य प्रवाहानादिताऽश्रयणीयेति । अत्रोत्तरं पठति–

**समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ॥ २९ ॥**

कृत्स्नोपसंहारे जगदुत्पत्त्यावृतावपि पूर्वोक्तात् समाननामरूपत्वादेव न कश्चिद् विरोधः । तथाहि स भगवान् पुरुषोत्तमः प्रलयावसानसमये पूर्वसंस्थानं जगत् स्मरन् 'बहु स्याम्' इति सङ्कल्प्य भोग्यभोक्तृजातं स्वस्मिन् शक्तिमात्रावशेषं प्रलीनं विभज्य महदादिब्रह्माण्डं हिरण्यगर्भपर्यन्तं यथापूर्वं सृष्ट्वा वेदांश्च पूर्वानुपूर्वविशेषसंस्थितानाविष्कृत्य हिरण्यगर्भायोपदिश्य पूर्ववदेव देवाद्याकारजगत्सर्गे तं नियुज्य स्वयमपि तदान्तरात्मतयाऽवतस्थे । अतो यथोक्तं सर्वमुपपन्नम् । एतदेव च वेदस्यापौरुषेयत्वं नित्यत्वं च, यत्पूर्वज्ञपूर्वोच्चारणक्रमक्रमजनितसंस्कारेण तमेव क्रमविशेषं स्मृत्वा तेनैव क्रमेणोच्चार्यत्वम् । तदस्मासु सर्वेश्वरेऽपि समानम् । इयांस्तु विशेषः । संस्कारानपेक्षमेव स्वयमेवानुसन्धत्ते पुरुषोत्तमः । कुत इदं यथोक्तमवगम्यते? इति चेत्, तत्राह – दर्शनात् स्मृतेश्च ।। दर्शनं तावद् 'यो ब्रह्माणं विदधाति पूर्वम् । यो वै वेदांश्च प्रहिणोति तस्मै' (श्वे. उ ६-१८) इति । स्मृतिरपि मानवी । 'आसीदिदं तमोभूतम्' इत्यारभ्य 'सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः । अप एव ससर्जादौ तासु वीर्यमवासृजत् । तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ।।' इति । तथा पौराणिकी 'तत्र सुप्तस्य देवस्य नाभौ पद्ममजायत । तस्मिन् पद्मे महाभाग वेदवेदाङ्गपारगः ।। ब्रह्मोत्पन्नस्स तेनोक्तः प्रजास्सृज महामते ।।' (नारद पु. ३-१) तथा, 'परो नारायणो देवस्तस्माज्जातश्चतुर्मुखः ।' (वा पु. २) इति । तथा 'आदिसर्गमहं वक्ष्ये' इत्यारभ्योच्यते 'सृष्ट्वा नारं तोयमन्तः स्थितोऽहं येन स्यान्मे नाम नारायणेति । कल्पे कल्पे तत्र शयामि भूयस्सुप्तस्य मे नाभिजं स्याद् यथाऽब्जम् ।। एवम्भूतस्य मे देवि नाभिपद्मे चतुर्मुखः । उत्पन्नस्स मया चोक्तः प्रजास्सृज महामते ।।' इति । अतो देवादीनामप्यर्थित्वसामर्थ्ययोगाद् ब्रह्मविद्यायामधिकारोऽस्तीति सिद्धम् ।। २९ ।।

पूर्वपक्षसूत्रम् –

**मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॥ ३० ॥**

ब्रह्मविद्यायां देवादीनामप्यधिकारोऽस्तीत्युक्तम् । इदमिदानीं चिन्त्यते येषूपासनेषु या देवता एवोपास्यास्तेषु तासामधिकारोऽस्ति, न इति । किं प्राप्तम्? नास्त्यधिकारस्तेषु मध्वादिष्विति जैमिनिर्मन्यते । कुतः? असम्भवात् । नह्यादित्यवस्वादिभिरुपास्या आदित्यवस्वादयोऽन्ये सम्भवन्ति । नच वस्वादीनां सतां वस्वादित्वं प्राप्यं भवति, प्राप्तत्वात् । मधुविद्यायामृग्वेदादिप्रतिपाद्यकर्मनिष्पाद्यस्य रश्मिद्वारेण प्राप्तस्य रसस्याश्रयतया

ಅದ್ವೈತಿಗಳು ದೇವತೆಗಳನ್ನು ಜಡಭೂತರೆಂದು ಪೂರ್ವಪಕ್ಷ ಮಾಡಿದ್ದಾರೆ. ಇದೇ ಸರಿಯಲ್ಲ. ಏಕೆಂದರೆ ಹಿಂದಿನ ಸೂತ್ರದಲ್ಲಿ ಮನುಷ್ಯ ಪದವಿದೆ. ಇದರಿಂದ ಮನಷ್ಯರಿಗೆ ಸಜಾತೀಯರಾದ ಮತ್ತೊಬ್ಬ ಚೇತನರ ಉಪಸ್ಥಿತಿಯೇ ನಮ್ಮ ಮನಸ್ಸಿನಲ್ಲಿ ಬರುತ್ತದೆ. ಅಂತಹ ಮತ್ತೊಬ್ಬ ಚೇತನರಿಗೆ

लब्धमधुव्यपदेशस्यादित्यस्यांशानां वस्वादिभिर्भुज्यमानानामुपास्यत्वं वस्वादित्वं च प्राप्यं श्रूयते । 'असौ वा आदित्यो देवमधु' इत्युपक्रम्य 'तद् यत्प्रथममृतं तद्वसव उपजीवन्ति' इत्युक्त्वा 'स य एतदेवममृतं वेद वसूनामेवैको भूत्वाऽग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति' इत्यादिना ।। ३० ।।

**ज्योतिषि भावाच्च ॥ ३१ ॥**

'तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्' (बृ. उ. ६-४-१६) इति ज्योतिषि परस्मिन् ब्रह्मणि उपासनं देवानां श्रूयते । देवमनुष्योभयसाधारणे परब्रह्मोपासने देवानामुपासकत्वकथनं
देवानामितरोपासननिवृत्तिं द्योतयति । अत एषु वस्वादीनामनधिकारः ।। ३१ ।।

इति प्राप्तेऽभिधीयते –

**भावं तु बादरायणोऽस्ति हि ॥ ३२ ॥**

आदित्यवस्वादीनामपि तेष्वधिकारभावं भगवान् बादरायणो मन्यते । अस्ति ह्यादित्यवस्वादीनामपि स्वावस्थब्रह्मोपासनेन वस्वादित्वप्राप्तिपूर्वकब्रह्मप्रेप्सासम्भवः । इदानीं वस्वादीनामपि सतां कल्पान्तरेऽपि वस्वादित्वप्राप्तिश्चापेक्षिता भवति । अत्र हि कार्यकारणोभयावस्थब्रह्मोपासनं विधीयते । 'असौ वा आदित्यो देवमधु' इत्यारभ्य 'अथ तत ऊर्ध्वं उदेत्य' (छा.उ. ३-११-१) इत्यतः प्रागादित्यवस्वादिकार्यविशेषावस्थं ब्रह्मोपास्यमुपदिश्यते । 'अथ तत ऊर्ध्वं उदेत्य' इत्यादिना आदित्यान्तरात्मतयाऽवस्थितं कारणावस्थमेव ब्रह्मोपास्यमुपदिश्यते । तदेवं कार्यकारणोभयावस्थं ब्रह्मोपासीनः कल्पान्तरे वस्वादित्वं प्राप्य तदन्ते कारणं परं ब्रह्मैवाप्नोति । 'न ह वा अस्मा उदेति न निम्लोचति, सकृदिवा हैवास्मै भवति, य एतामेवं ब्रह्मोपनिषदं वेद' इति कृत्स्नाया मधुविद्याया ब्रह्मोपनिषत्त्वश्रवणाद् ब्रह्मप्राप्तिपर्यन्तवस्वादित्वफलस्य श्रवणाच्च वस्वादिभोग्यभूतादित्यंशस्य विधीयमानमुपासनं तदवस्थस्यैव ब्रह्मण इत्यवगम्यते । अत एवंविधमुपासनमादित्यवस्वादीनामपि सम्भवति । एवञ्च ब्रह्मण एवोपास्यत्वात् 'तं देवा ज्योतिषां ज्योतिः' इत्युपपद्यते । तदाह वृत्तिकारः– 'अस्ति हि मध्वादिषु सम्भवो ब्रह्मण एव सर्वत्र निचाय्यत्वाद्' इति ।।

ವೇದವಿದ್ಯೆಯಲ್ಲಿ ಅಧಿಕಾರವನ್ನು ಹೇಳುತ್ತಿಲ್ಲವೆಂಬ ಪೂರ್ವಪಕ್ಷವನ್ನು ಮಾಡಬೇಕೇ ಹೊರತು, ವಿಜಾತೀಯವಾದ ಜಡಕ್ಕೆ ಅಧಿಕಾರವಿಲ್ಲವೆಂಬ ಪೂರ್ವಪಕ್ಷವು ಅತ್ಯಂತ ಅಸಂಗತವಾಗುತ್ತವೆ.

**अस्मद्रीत्या "अभिमानि" इति सूत्रोक्तन्यायेन मन्त्रादेः स्वार्थपरत्वेन विग्रहाद्यङ्गीकारेण पूर्वपक्षसम्भवे तदनङ्गीकारेण तस्य जघन्यत्वाच्च ।**

ಮತ್ತು ನಾವು ಹೇಳುವಂತೆ ಅಭಿಮಾನಿಸೂತ್ರದ ನ್ಯಾಯದಂತೆ ಮಂತ್ರಾದಿಗಳಿಗೆ ಸ್ವಾರ್ಥಪರತ್ವವನ್ನೇ ಒಪ್ಪಿ, ದೇವತೆಗಳಿಗೆ ಶರೀರಾದಿಗಳನ್ನು ಒಪ್ಪುವ ಮೂಲಕವೇ ಪೂರ್ವಪಕ್ಷ ಮಾಡಲು ಬರುವಾಗ, ದೇವತೆಗಳಿಗೆ ಚಿದ್ರೂಪವಾದ ಶರೀರವಿಲ್ಲವೆಂದು ಹೇಳಿ ಮಂತ್ರಾದಿಗಳಿಗೆ ಸ್ವಾರ್ಥಪರತ್ವವನ್ನು ಬಿಟ್ಟು ಅರ್ಥೈಸಿ ಪೂರ್ವಪಕ್ಷ ಮಾಡುವುದು ಅತ್ಯಂತ ಜಘನ್ಯವಾಗಿದೆ.

**किञ्च पूर्वपक्षे स्वार्थे मन्त्रादेरप्रामाण्येऽप्युपनिषदामपि स्वार्थे प्रामाण्यं नास्ति चेद्ब्रह्मैव च न सिध्येत् । अस्ति चेत् "ता एता देवताः सृष्टा अस्मिन्महत्यर्णवे प्रापतंस्तमशनायापिपासाभ्यामन्ववार्जत् ता एनमब्रुवन्" इति "तत एते व्यजायन्त विश्वो हिरण्यगर्भोऽग्निर्यमो वरुणरुद्रेन्द्राः" इत्याद्युपनिषद्भिरेव विग्रहादिसिद्धिः । नहि ताः स्रष्टरि प्रमाणं सृज्ये तु नेति युक्तम् ।**

ಮತ್ತು ಪೂರ್ವಪಕ್ಷ ಮಾಡುವಾಗ ಮಂತ್ರಾದಿಗಳಿಗೆ ಸ್ವಾರ್ಥದಲ್ಲಿ ಪ್ರಾಮಾಣ್ಯವಿಲ್ಲವೆಂದು ಹೇಳಿದಿರಿ. ಆ ಸಂದರ್ಭದಲ್ಲಿ ಉಪನಿಷತ್ತುಗಳಿಗೆ ಸ್ವಾರ್ಥದಲ್ಲಿ ಪ್ರಾಮಾಣ್ಯವನ್ನು ಒಪ್ಪುವುದಿಲ್ಲವೋ, ಅಥವಾ ಒಪ್ಪುತ್ತೀರೋ, ಸ್ವಾರ್ಥದಲ್ಲಿ ಪ್ರಾಮಾಣ್ಯವನ್ನು ಒಪ್ಪದಿದ್ದರೆ ಬ್ರಹ್ಮನೂ ಸಹ ಸಿದ್ಧನಾಗದಿರಬೇಕಾದೀತು. ಉಪನಿಷತ್ತುಗಳಿಗೆ ಸ್ವಾರ್ಥದಲ್ಲಿ ಪ್ರಾಮಾಣ್ಯವನ್ನು ಒಪ್ಪುವುದಾದರೆ ಅದೇ ಉಪನಿಷತ್ತುಗಳಿಂದ 'ತಾ ಏತಾ ದೇವತಾಃ ಸೃಷ್ಟಾ ಅಸ್ಮಿನ್ ಮಹತ್ಯರ್ಣವೇ ಪ್ರಾಪತಂಸ್ತಮಶ-ನಾಯಾಪಿಪಾಸಾಭ್ಯಾಮನ್ವವಾರ್ಜತ್ ತಾ ಏನಮಬ್ರುವನ್' ಎಂಬುದಾಗಿ ದೇವತೆಗಳಿಗೆ ಶರೀರವಿದೆಯೆಂದೂ ಸಹ ಸಿದ್ಧವಾಗುತ್ತದೆ. ಮತ್ತು 'ತತ ಏತೇ ವ್ಯಜಾಯಂತ ವಿಶ್ವೋ ಹಿರಣ್ಯಗರ್ಭೋಽಗ್ನಿರ್ಯಮೋ ವರುಣರುದ್ರೇಂದ್ರಾಃ' ಎಂಬ ಉಪನಿಷತ್ತಿನಿಂದಲೂ ಶರೀರವುಳ್ಳ ದೇವತೆಗಳ ಸೃಷ್ಟಿಯನ್ನು ಬ್ರಹ್ಮನು ಮಾಡಿದನೆಂದು ತಿಳಿಯುತ್ತದೆ. ಈ ಮಾತಿನಿಂದಲೂ ದೇವತೆಗಳಿಗೆ ಶರೀರವಿದೆಯೆಂದು ಸ್ಪಷ್ಟವಾಗುತ್ತದೆ. ಒಂದೇ ಉಪನಿಷತ್ತು ಸ್ರಷ್ಟವಾದ ಬ್ರಹ್ಮನ ವಿಷಯದಲ್ಲಿ ಪ್ರಮಾಣವಾಗುತ್ತದೆ. ಸೃಜ್ಯವಾದ ದೇವತೆಗಳ ಶರೀರವಿಷಯದಲ್ಲಿ ಪ್ರಮಾಣವಾಗುವುದಿಲ್ಲವೆಂದು ಹೇಳುವುದು ಅಯುಕ್ತವಾಗಿದೆ.

ದೇವತಾಧಿಕರಣ (೧-೩-೮)

किञ्च

देवताविग्रहादिश्चेत् श्रुतितात्पर्यगोचरः ।
बाध्यो न स्यान्न चेन्न स्याद्व्यावहारिकसन्नपि ।। १ ।।

अन्यथा चितिमात्रं च बाध्येतैव कदाचन ।
यजमानप्रस्तरत्वमपि स्याद्व्यावहारिकम् ।। २ ।। समर्थितं चैतत्प्राक् ।

ಮತ್ತು

ದೇವತಾವಿಗ್ರಹಾದಿಶ್ಚೇತ್ ಶ್ರುತಿತಾತ್ಪರ್ಯಗೋಚರಃ ।
ಬಾಧ್ಯೋ ನ ಸ್ಯಾನ್ನ ಚೇನ್ನ ಸ್ಯಾದ್ವ್ಯಾವಹಾರಿಕಸನ್ನಪಿ ॥೧॥

ದೇವತಾದಿಗಳ ಶರೀರವು ಶ್ರುತಿತಾತ್ಪರ್ಯಕ್ಕೆ ವಿಷಯವಾಗದಿದ್ದರೆ, ಬಾಧ್ಯವಾಗದೇ ಪಾರಮಾರ್ಥಿಕವಾಗಬೇಕಾದೀತು. ಒಂದು ವೇಳೆ ಶ್ರುತಿತಾತ್ಪರ್ಯಗೋಚರವಲ್ಲದಿದ್ದರೆ, ವ್ಯಾವಹಾರಿಕ ಸತ್ವವನ್ನೂ ಸಹ ಹೇಳದೇ, ಪ್ರಾತಿಭಾಸಿಕಸತ್ವವನ್ನೇ ಹೇಳಬೇಕಾದೀತು.

ಅನ್ಯಥಾ ಚಿತಿಮಾತ್ರಂ ಚ ಬಾಧ್ಯೇತೈವ ಕದಾಚನ ।
ಯಜಮಾನಪ್ರಸ್ತರತ್ವಮಪಿ ಸ್ಯಾದ್ವ್ಯಾವಹಾರಿಕಮ್ ॥೨॥

ಒಂದು ವೇಳೆ ಶ್ರುತಿ ತಾತ್ಪರ್ಯ ಗೋಚರವಾದರೂ ಸಹ ಪಾರಮಾರ್ಥಿಕವಾಗದಿದ್ದರೆ ಚಿನ್ಮಾತ್ರವೂ ಕೂಡ ಪಾರಮಾರ್ಥಿಕವಾಗದೇ ಬಾಧ್ಯವಾಗಬೇಕಾದೀತು. ಮತ್ತು ಶ್ರುತಿ ತಾತ್ಪರ್ಯಗೋಚರವಾಗದಿದ್ದಾಗ ವ್ಯವಾಹಾರಿಕವಾಗುವುದಾದರೆ, ಯಜಮಾನಕ್ಕೆ ಪ್ರಸ್ತರತ್ವವೂ ಸಹ ಪ್ರಾತಿಭಾಸಿಕವೆಂದಾಗದೇ, ವ್ಯವಹಾರಿಕವೆಂದಾಗಬೇಕಾದೀತು.

ಈ ವಿಷಯವನ್ನು ಈ ಹಿಂದೆ ಸಮರ್ಥಿಸಿದ್ದಾಗಿದೆ.

प्रकाशः –

मन्त्रेति ।। मन्त्रस्यानुष्ठेयद्रव्यदेवताप्रकाशनपरत्वेन अर्थवादस्यानुष्ठेयस्तुतिपरत्वेन आदिपदोक्तस्य विधेर्विधेयार्थविधानपरत्वेन देवताविग्रहादौ तात्पर्याभावादतात्पर्यविषयस्यासिद्धेरित्यर्थः ।

ವಿವರಣೆ - ಅದ್ವೈತಿಗಳ ಹಾಗೂ ರಾಮಾನುಜರ ಅಧಿಕರಣಶರೀರವನ್ನು ಅನುವಾದ ಮಾಡಿ ನಿರಾಕರಣೆ ಮಾಡುತ್ತಿದ್ದಾರೆ.

ಮಂತ್ರವು ಅನುಷ್ಠೇಯವಾದ ದ್ರವ್ಯ ಹಾಗೂ ದೇವತೆಗಳ ಪ್ರಕಾಶನ ಪರವಾಗಿದೆ. ಅರ್ಥವಾದವು ಅನುಷ್ಠಾನಮಾಡುವುದಕ್ಕಾಗಿ ಸ್ತೋತ್ರಮಾಡುತ್ತಿದೆ. ಆದಿಪದದಿಂದ ವಿಧಿವಾಕ್ಯವನ್ನು ಸ್ವೀಕರಿಸಬೇಕು. ಅದು ವಿಧೇಯವಾದ ಅರ್ಥವನ್ನಷ್ಟೇ ವಿಧಾನ ಮಾಡುತ್ತದೆ. ಹೀಗೆ ವೇದದಲ್ಲಿರುವ ಮಂತ್ರ, ಅರ್ಥವಾದ, ವಿಧಿ ಈ ಮೂರು ಬಗೆಯ ವಾಕ್ಯಗಳಿಗೂ ದೇವತಾಸ್ವರೂಪದ ಸಮರ್ಥನೆಯಲ್ಲಿ ತಾತ್ಪರ್ಯವೇ ಇರುವುದಿಲ್ಲ. ಹಾಗಾಗಿ ಚೇತನರಾದ ದೇವತೆಗಳಿದ್ದಾರೆಂಬ ವಿಷಯವು ಸಿದ್ಧವಾಗುವುದಿಲ್ಲ ಎಂಬುದು ಮಂತ್ರ, ಅರ್ಥವಾದ ಇತ್ಯಾದಿ ವಾಕ್ಯದ ಅಭಿಪ್ರಾಯವಾಗಿದೆ.

**प्रकाशः** – देवताभावे यागासिद्धिरित्यतो भामत्युक्तमाह – **अर्थेति** ।। चतुर्थ्यन्त-शब्दप्रतीतमात्रश्शब्दावच्छिन्नस्तादृगर्थनियमितः शब्दो वा देवतेत्यर्थः ।।

ದೇವತೆಗಳೇ ಇಲ್ಲವಾದಲ್ಲಿ ಯಾಗವು ಅಸಿದ್ಧವಾಗುತ್ತದಲ್ಲವೇ? ಎಂಬ ಪ್ರಶ್ನೆಗೆ ಭಾಮತಿಯಲ್ಲಿ ಹೇಳಿದ ಅಭಿಪ್ರಾಯವನ್ನು 'ಅರ್ಥ' ಇತ್ಯಾದಿ ವಾಕ್ಯದಿಂದ ಹೇಳಿರುತ್ತಾರೆ. ಅಂದರೆ ಜಡವಾದ ದೇವತೆಯನ್ನು ಉದ್ದೇಶಿಸಿ, ಯಾಗಾದಿಗಳು ಸಿದ್ಧಿಸುತ್ತವೆ ಎಂದಭಿಪ್ರಾಯ. ಅರ್ಥವಿಶೇಷಕ್ಕೆ ವಾಚಕವಾದ ಶಬ್ದ ಅಥವಾ ಶಬ್ದದಿಂದ ಬೋಧಿತವಾದ ಅರ್ಥವಿಶೇಷ, ಇದನ್ನೇ ದೇವತೆಯೆಂದು ಹೇಳುತ್ತಾರೆ. ಇದನ್ನು ಉದ್ದೇಶಿಸಿ ಯಾಗ ಮಾಡಬಹುದು.

**प्रकाशः** – **मन्त्रेति** ।। वज्रहस्तः पुरन्दरः । तेनेन्द्रो वज्रमुदयच्छदित्यादि-भिरित्यर्थः ।

'ವಜ್ರಹಸ್ತಃ ಪುರಂದರಃ' 'ತೇನೇಂದ್ರೋ ವಜ್ರಮುದಯಚ್ಛತ್' ಇವುಗಳನ್ನು ಮಂತ್ರವೆಂದು ತಿಳಿಯಬೇಕು.

**प्रकाशः** – नच मन्त्रादीनामन्यपरत्वमुक्तमिति वाच्यम् । प्रकाशनस्तुत्यादि-परत्वेऽपि मानान्तराविरुद्धे स्वार्थेऽपि तात्पर्यात् । अन्यथा गुणिनिष्ठगुणाभिधान-रूपस्तुत्यादेरनुन्मेषादिति भावः ।

ಮಂತ್ರಾದಿಗಳಿಗೆ ಅನ್ಯಪರತ್ವವನ್ನು ಹೇಳಬಹುದಲ್ಲವೇ? ಎಂದು ಪ್ರಶ್ನಿಸಬಾರದು. ಪ್ರಕಾಶನ, ಸ್ತುತಿ ಮೊದಲಾದವುಗಳನ್ನು ಮಂತ್ರ, ಅರ್ಥವಾದಾದಿಗಳು ಪ್ರತಿಪಾದನೆ ಮಾಡಿದರೂ, ಪ್ರಮಾಣಾಂತರದಿಂದ ಅವಿರುದ್ಧವಾದ ಸ್ವಾರ್ಥದಲ್ಲಿಯೂ ಸಹ ತಾತ್ಪರ್ಯವನ್ನು ಹೊಂದಿರುತ್ತವೆ. ಹೀಗೊಪ್ಪದಿದ್ದರೆ ಗುಣಿಯಲ್ಲಿರುವ ಗುಣವನ್ನು ಹೇಳುವಿಕೆಯೆಂಬ ಸ್ತೋತ್ರಕ್ಕೆ ಅವಕಾಶವೇ ಇಲ್ಲವೆಂದಾಗಬೇಕಾದೀತು.

**प्रकाशः** – गत्यन्तराभावादेवमाश्रीयत इत्यत आह – **अस्मदिति** ।। तस्य जडानधिकारपूर्वपक्षस्य । असिद्धं च विग्रहादिराहित्यमित्याह – **किञ्चेति** ।।

ಬೇರೆ ಗತಿಯಿಲ್ಲದ ಕಾರಣ ಹೀಗೆ ಪೂರ್ವಪಕ್ಷ ಮಾಡುತ್ತೇವೆ ಎಂದು ಆಕ್ಷೇಪ ಮಾಡಿದರೆ 'ಅಸ್ಮದ್ರೀತ್ಯಾ'

ಎಂಬ ವಾಕ್ಯದಿಂದ ಉತ್ತರಿಸಿದ್ದಾರೆ. ನಾವು ಹೇಳುವಂತೆ ದೇವತಾಶರೀರಾದಿಗಳನ್ನು ಒಪ್ಪಿ, ಸ್ವಾರ್ಥದಲ್ಲಿ ತಾತ್ಪರ್ಯವನ್ನೂ ಸಹ ಒಪ್ಪಿ, ಪ್ರಕಾರಾಂತರದಿಂದ ಪೂರ್ವಪಕ್ಷ ಮಾಡಲು ಬರುತ್ತಿರುವಾಗ ಬೇರೆ ಗತಿಯಿಲ್ಲವೆಂದು ಹೇಳುವುದು ತಪ್ಪೆಂದು ಅಭಿಪ್ರಾಯ. 'ತಸ್ಯ' ಎಂಬ ಪದಕ್ಕೆ ಜಡಾನಧಿಕಾರವಾದ ಪೂರ್ವಪಕ್ಷಕ್ಕೆ ಎಂದರ್ಥ. ಮತ್ತು ದೇವತೆಗಳಿಗೆ ಶರೀರಾದಿಗಳಿಲ್ಲ ಎಂದು ಹೇಳಿದ್ದು ಅಸಿದ್ಧವಾಗಿದೆಯೆಂಬುದಾಗಿ 'ಕಿಂಚ' ಇತ್ಯಾದಿ ವಾಕ್ಯದಿಂದ ಸಮರ್ಥನೆ ಮಾಡುತ್ತಿದ್ದಾರೆ.

**प्रकाशः** – 'ता एताः' इत्यैतरेयवाक्यम् । 'तत एते' इत्यदृश्यत्वनये भाष्योक्तश्रुतिरियम् । **न हीति** ।। नियामकाभावेन स्रष्टुस्सृज्यसापेक्षतया तत्राप्रामाण्ये स्रष्टर्यपि तथा स्यादित्यर्थः ।

'ತಾ ಏತಾಃ' ಎಂಬುದು ಐತರೇಯೋಪನಿಷತ್ತಿನ ವಾಕ್ಯ. 'ತತ ಏತೇ' ಎಂಬ ವಾಕ್ಯವನ್ನು ಅದೃಶ್ಯತ್ವಾಧಿಕರಣದ ಭಾಷ್ಯದಲ್ಲಿ ಉದಾಹರಿಸಲಾಗಿದೆ. 'ನಹಿ' ಇತ್ಯಾದಿ ವಾಕ್ಯದ ಅಭಿಪ್ರಾಯ ಹೀಗಿದೆ - ಸೃಜ್ಯದಲ್ಲಿ ಪ್ರಾಮಾಣ್ಯವಿಲ್ಲದಿದ್ದರೆ ನಿಯಾಮಕವಿಲ್ಲದ ಕಾರಣ ಸ್ರಷ್ಟೃವಿನಲ್ಲೂ ಪ್ರಾಮಾಣ್ಯವಿಲ್ಲವೆಂದಂತಾಯಿತು. ಸ್ರಷ್ಟೃವು ಸೃಜ್ಯವನ್ನು ಅಪೇಕ್ಷಿಸಿದ್ದರಿಂದ ಸೃಜ್ಯದಲ್ಲಿ ಪ್ರಾಮಾಣ್ಯವು ಸಿದ್ಧವಾಗದಿದ್ದರೆ ಸ್ರಷ್ಟೃವಿನಲ್ಲೂ ಪ್ರಾಮಾಣ್ಯವು ಸಿದ್ಧವಾಗುವುದಿಲ್ಲ ಎಂದರ್ಥ.

**प्रकाशः** – एवं मतद्वये पूर्वपक्षं साधारणदोषेण निरस्याद्वैतमते सिद्धान्तोऽप्ययुक्त इत्याह – **किञ्चेति** ।। **न स्यादिति** ।। ब्रह्मवदिति शेषः ।

ಇಲ್ಲಿಯ ತನಕ ಇಬ್ಬರಿಗೂ ಸಾಧಾರಣವಾದ ಪೂರ್ವಪಕ್ಷದೋಷವನ್ನು ಹೇಳಿ ಈಗ ಅದ್ವೈತಮತ ಸಿದ್ಧಾಂತವೂ ಸಹ ಅಯುಕ್ತವಾಗಿದೆಯೆಂದು ಸಮರ್ಥನೆ ಮಾಡುತ್ತಿದ್ದಾರೆ 'ಕಿಂಚ' ಇತ್ಯಾದಿ ವಾಕ್ಯದಿಂದ. 'ನ ಸ್ಯಾತ್' ಎಂಬಲ್ಲಿ 'ಬ್ರಹ್ಮವತ್' ಎಂಬುದನ್ನು ಶೇಷಪೂರಣ ಮಾಡಿಕೊಳ್ಳಬೇಕು. ಅಂದರೆ ಬ್ರಹ್ಮನಂತೆ ಬಾಧ್ಯವು ಆಗದಿರಬೇಕಾದೀತು ಎಂದರ್ಥ.

**प्रकाशः** – **नचेत्** ।। श्रुतितात्पर्यगोचर इत्यनुषङ्गः । सन्नपि विग्रहादिरित्यन्वयः। यजमानप्रस्तरत्ववदिति भावः ।

'ನಚೇತ್' ಎಂಬಲ್ಲಿ 'ಶ್ರುತಿತಾತ್ಪರ್ಯಗೋಚರ' ಎಂಬುದನ್ನು ಅನುಷಂಗ ಮಾಡಿಕೊಳ್ಳಬೇಕು. 'ಸನ್ನಪಿ ವಿಗ್ರಹಾದಿಃ' ಎಂದು ಅನ್ವಯ. ಅಂದರೆ ವಿಗ್ರಹಾದಿಗಳು ವ್ಯವಹಾರಿಕವಾಗಿಯೂ ಕೂಡದಿರಬೇಕಾದೀತು ಎಂದನ್ವಯ. ಈ ವಿಷಯದಲ್ಲಿ 'ಯಜಮಾನಪ್ರಸ್ತರಃ' ಎಂಬುದು ಉದಾಹರಣೆಯಾಗಿದೆ.

**प्रकाशः** – विपक्षे बाधकाभावाद्व्यासिहीनौ द्वावपि तर्कावित्यत उभयत्र विपक्षे बाधकमाह – **अन्यथेति** ।। तात्पर्यगोचरस्यापि बाध्यत्व इत्यर्थः ।।

'ಯದಿ ವಿಗ್ರಹಾದಿಕಂ ಶ್ರುತಿತಾತ್ಪರ್ಯ ಗೋಚರಂ ಸ್ಯಾತ್ ತದಾ ಪಾರಮಾರ್ಥಿಕಮ್ ಸ್ಯಾತ್'

ಎಂಬುದು ಮೊದಲನೆಯ ತರ್ಕ. ಶ್ರುತಿತಾತ್ಪರ್ಯ ಗೋಚರವಾದ ಮಾತ್ರಕ್ಕೆ ಪಾರಮಾರ್ಥಿಕ ಏಕೆ ಆಗಬೇಕು? ಎಂಬ ಪ್ರಶ್ನೆಯು ಪ್ರಾಪ್ತವಾದರೆ, ವಿಪಕ್ಷೇ ಬಾಧಕತರ್ಕವನ್ನು ಹೇಳಬೇಕು. ಒಂದು ವೇಳೆ ಶ್ರುತಿತಾತ್ಪರ್ಯ- ಗೋಚರವಾಗಿದ್ದರೂ ಪಾರಮಾರ್ಥಿಕತ್ವವನ್ನು ಒಪ್ಪದಿದ್ದರೆ ಬ್ರಹ್ಮನೂ ಸಹ ಪಾರಮಾರ್ಥಿಕ-ನಾಗದಿರಬೇಕಾದೀತು. ಇದು ಮೊದಲನೆಯ ತರ್ಕ.

'ಯದಿ ಶ್ರುತಿತಾತ್ಪರ್ಯ ಗೋಚರಂ ನ ಸ್ಯಾತ್ ತದಾ ವ್ಯಾವಹಾರಿಕತ್ವಮಪಿ ನ ಸ್ಯಾತ್' ಈ ವಿಷಯದಲ್ಲಿ 'ಯಜಮಾನಪ್ರಸ್ತರಃ' ಎಂಬುದು ಉದಾಹರಣೆಯಾಗಿದೆ. ಯಜಮಾನಪ್ರಸ್ತರಾತ್ವದಿಗಳನ್ನು ವ್ಯವಹಾರಿಕವೆಂದು ಒಪ್ಪದಿದ್ದರೆ ಶ್ರುತಿತಾತ್ಪರ್ಯಗೋಚರತ್ವವು ಅದರಲ್ಲಿಯೂ ಬರಬೇಕಾದೀತು. 'ಯಜಮಾನಪ್ರಸ್ತರಃ' ಎಂಬುದು ಪ್ರಾತಿಭಾಸಿಕವಾದ್ದರಿಂದ ವ್ಯಾವಹಾರಿಕತ್ವವು ಅದರಲ್ಲಿ ಇರುವುದಿಲ್ಲವೆಂದು ತಿಳಿಯಬೇಕು. ಆದ್ದರಿಂದ ವಿಪಕ್ಷೇ ಬಾಧಕವಿಲ್ಲದ ಕಾರಣ ಎರಡೂ ತರ್ಕಗಳು ವ್ಯಾಪ್ತಿಹೀನವಾಗಿವೆಯೆಂಬ ಪ್ರಶ್ನೆಗೆ ಎರಡೂ ತರ್ಕಗಳಲ್ಲಿ ವಿಪಕ್ಷೇ ಬಾಧಕವನ್ನು ಹೇಳುತ್ತಿದ್ದಾರೆ 'ಅನ್ಯಥಾ' ಇತ್ಯಾದಿ ವಾಕ್ಯದಿಂದ 'ಅನ್ಯಥಾ' ಎಂದರೆ ತಾತ್ಪರ್ಯಗೋಚರವಾದರೂ ಬಾಧ್ಯವಾಗುವುದಾದರೆ ಎಂದರ್ಥ.

**प्रकाशः – यजमानेति ।।** अन्यथेत्यनुषङ्गः । तात्पर्यागोचरस्यापि व्यावहारिकत्व इत्यर्थः ।। **प्रागिति ।।** जिज्ञासाधिकरणे ।

'ಯಜಮಾನಃ ಪ್ರಸ್ತರಃ' ಎಂಬಲ್ಲಿ 'ಅನ್ಯಥಾ' ಎಂಬುದನ್ನು ಅನುಷಂಗ ಮಾಡಿಕೊಳ್ಳಬೇಕು. ತಾತ್ಪರ್ಯಗೋಚರವಾಗದಿದ್ದರೂ ವ್ಯಾವಹಾರಿಕವಾಗುವುದಾದರೆ 'ಯಜಮಾನಃ ಪ್ರಸ್ತರಃ' ಎಂಬುದೂ ಕೂಡ ವ್ಯಾವಹಾರಿಕವಾಗಬೇಕಾದೀತು ಎಂದಭಿಪ್ರಾಯ. 'ಪ್ರಾಕ್' ಎಂದರೆ ಜಿಜ್ಞಾಸಾಧಿಕರಣದಲ್ಲಿ ಈ ಯಜಮಾನಪ್ರಸ್ತರಾಧಿಕರಣವನ್ನು ಸಮರ್ಥಿಸಲಾಗಿದೆ.




ಶಾಂಕರಭಾಷ್ಯ ಹಾಗೂ ರಾಮಾನುಜಭಾಷ್ಯ ಎರಡರಲ್ಲಿಯೂ ಒಂದೇ ಬಗೆಯ ಅಧಿಕರಣ ಶರೀರವಿದೆ - ವೇದವು ಮಂತ್ರ, ಅರ್ಥವಾದ, ವಿಧಿ ಎಂದು ಮೂರುಬಗೆಯಲ್ಲಿದೆ. ಮಂತ್ರಭಾಗವು ಅನುಷ್ಠೇಯವಾದ ದ್ರವ್ಯಾದಿಗಳನ್ನು ಪ್ರತಿಪಾದನೆ ಮಾಡಿದರೆ, ಅರ್ಥವಾದವು ಶ್ರುತಿಪರವಾಗಿದೆ. ವಿಧಿಭಾಗವು ಕರ್ಮಪರವಾಗಿದೆ. ಒಟ್ಟಾರೆ ವೇದದಲ್ಲೆಲ್ಲೂ ದೇವತೆಗಳ ಚಿದ್ರೂಪ ಶರೀರದ ವರ್ಣನೆಯಿರುವುದಿಲ್ಲ. ಹಾಗಾಗಿ ದೇವತೆಗಳಿಗೆ ಚಿದ್ರೂಪಶರೀರವೇ ಇರುವುದಿಲ್ಲ. ಮತ್ತೆ ಅರ್ಥವಿಶಿಷ್ಟವಾದ ಶಬ್ದವೇ ದೇವತೆಯೆನ್ನಬೇಕು. ಅಥವಾ ಶಬ್ದವಿಶಿಷ್ಟವಾದ ಅರ್ಥವನ್ನೇ ದೇವತೆಯೆನ್ನಬೇಕು. ಇವೆರಡೂ ಜಡವಾದ್ದರಿಂದ ಜಡವಾದ ದೇವತೆಗೆ ವೇದವನ್ನು ಓದುವಂತಹ ಸಾಮರ್ಥ್ಯವನ್ನು ಹೇಳಲು ಹೇಗೆ ಸಾಧ್ಯ ? ಹಾಗಾಗಿ ಮನುಷ್ಯರು ಮಾತ್ರ ಅಧಿಕಾರಿಗಳು. ಜಡವಾದ ದೇವತೆಗೆ ಬ್ರಹ್ಮವಿದ್ಯೆಯಲ್ಲಿ ಅಧಿಕಾರವಿಲ್ಲವೆಂದು ಪೂರ್ವಪಕ್ಷ.

ಮಂತ್ರ ಮೊದಲಾದ ವೇದಭಾಗಗಳಿಂದಲೇ ದೇವತೆಗಳಿಗೆ ಶರೀರವಿದೆಯೆಂದು ತಿಳಿಯುತ್ತಿದೆ. ಅಂತಹ ಚಿದ್ರೂಪರಾದ ದೇವತೆಗಳಿಗೆ ವೇದವಿದ್ಯೆಯಲ್ಲಿ ಅಧಿಕಾರವನ್ನು ಹೇಳಬಹುದು ಎಂದು ಸಿದ್ಧಾಂತ.

ದೇವತಾಧಿಕರಣ (೧-೩-೮)

ಇವರ ಈ ಅಧಿಕರಣಶರೀರ ಸರಿಯಿಲ್ಲ. ಏಕೆಂದರೆ ಹಿಂದಿನ ಸೂತ್ರದಲ್ಲಿ ಮನಷ್ಯ ಪದವಿದೆ. ಮನುಷ್ಯರಿಗೆ ಸಜಾತೀಯರಾದ ಮತ್ತೊಬ್ಬ ಚೇತನರಿಗೆ ಅಧಿಕಾರವಿದೆಯೋ ಇಲ್ಲವೋ? ಎಂಬ ಸಂಶಯವೇ ಬರುತ್ತದೆ. ಹೊರತು, ಜಡವಾದ ಪದಾರ್ಥಕ್ಕೆ ವೇದವಿದ್ಯಾಧಿಕಾರದ ಸಂಶಯ ಬರುವುದೇ ಇಲ್ಲ. ಆದ್ದರಿಂದ ಜಡಕ್ಕೆ ಅಧಿಕಾರವಿಲ್ಲವೆಂಬ ಪೂರ್ವಪಕ್ಷವು ಅತ್ಯಂತ ಅಸಂಗತವಾಗಿದೆ. ಮತ್ತು ನಾವು ಹೇಳುವಂತೆ ಮಂತ್ರಾದಿಗಳಿಗೆ ಸ್ವಾರ್ಥಪರತ್ವವನ್ನು ಒಪ್ಪಿ, ದೇವತೆಗಳಿಗೆ ಶರೀರಾದಿಗಳನ್ನು ಒಪ್ಪಿಯೇ ಪೂರ್ವಪಕ್ಷ ಮಾಡಲು ಬರುವಾಗ ಸ್ವಾರ್ಥಪರತ್ವಾದಿಗಳನ್ನು ಒಪ್ಪದೇ ಗೌಣಾರ್ಥವನ್ನು ಮಾಡುವ ಮೂಲಕ, ಪೂರ್ವಪಕ್ಷ ಮಾಡುವುದು ಅತ್ಯಂತ ಜಘನ್ಯವಾಗಿದೆ. ಮತ್ತು ಉಪನಿಷತ್ತುಗಳಿಗೆ ಸ್ವಾರ್ಥದಲ್ಲಿ ಪ್ರಾಮಾಣ್ಯವೇ ಇಲ್ಲವೆಂದಾದರೆ, ಬ್ರಹ್ಮನಲ್ಲಿಯೂ ಕೂಡ ಪ್ರಾಮಾಣ್ಯವಿಲ್ಲವೆಂದಂತಾಗುತ್ತದೆ. ಬ್ರಹ್ಮವಿಷಯದಲ್ಲಿ ಪ್ರಾಮಾಣ್ಯವನ್ನು ಒಪ್ಪುವುದಾದರೆ, ಅದೇ ಉಪನಿಷತ್ತುಗಳಿಂದಲೇ ದೇವತೆಗಳ ಶರೀರವಿದೆಯೆಂಬ ವಿಷಯವೂ ಸಹ ಸಿದ್ಧವಾಗುತ್ತದೆ.

ದೇವತಾದಿಗಳ ಶರೀರವು ಶ್ರುತಿತಾತ್ಪರ್ಯಕ್ಕೆ ವಿಷಯವಾಗದಿದ್ದರೆ, ಬಾಧ್ಯವಾಗದೇ ಪಾರಮಾರ್ಥಿಕವಾಗಬೇಕಾದೀತು. ಒಂದು ವೇಳೆ ಶ್ರುತಿತಾತ್ಪರ್ಯಗೋಚರವಲ್ಲದಿದ್ದರೆ, ವ್ಯಾವಹಾರಿಕ ಸತ್ವವನ್ನೂ ಸಹ ಹೇಳದೇ, ಪ್ರಾತಿಭಾಸಿಕಸತ್ವವನ್ನೇ ಹೇಳಬೇಕಾದೀತು.

ಒಂದು ವೇಳೆ ಶ್ರುತಿ ತಾತ್ಪರ್ಯ ಗೋಚರವಾದರೂ ಸಹ ಪಾರಮಾರ್ಥಿಕವಾಗದಿದ್ದರೆ ಚಿನ್ಮಾತ್ರವೂ ಕೂಡ ಪಾರಮಾರ್ಥಿಕವಾಗದೇ ಬಾಧ್ಯವಾಗಬೇಕಾದೀತು. ಮತ್ತು ಶ್ರುತಿ ತಾತ್ಪರ್ಯಗೋಚರವಾಗದಿದ್ದಾಗ ವ್ಯಾವಹಾರಿಕವಾಗುವುದಾದರೆ, ಯಜಮಾನಕ್ಕೆ ಪ್ರಸ್ತರತ್ವವೂ ಸಹ ಪ್ರಾತಿಭಾಸಿಕವೆಂದಾಗದೇ, ವ್ಯಾವಹಾರಿಕವೆಂದಾಗಬೇಕಾದೀತು.



## ದೇವತೆಗಳಿಗೆ ಯಜ್ಞಾದಿಕರ್ಮಗಳಲ್ಲಿ ಅಧಿಕಾರವಿಲ್ಲವೆಂಬ ಅದ್ವೈತಮತ ತಪ್ಪು

### तात्पर्यचन्द्रिका

**यच्चोक्तं परैः देवतानां देवतान्तराभावेन तदुद्देशेन हविस्त्यागायोगाद् ऋषीणां च भृग्वादीनां भृग्वाद्यन्तराभावेन तद्वरणायोगाद्यज्ञादिकर्मस्वनधिकारेऽपि ब्रह्मविद्यासु सोऽस्तीति ।**

ಅನುವಾದ - ಅದ್ವೈತಿಗಳ ಎರಡನೆಯ ಸೂತ್ರ ವ್ಯಾಖ್ಯಾನ ಹೀಗಿದೆ - ದೇವತೆಗಳಿಗೆ ಯಜ್ಞದಲ್ಲಿ ಅಧಿಕಾರವಿಲ್ಲ. ಸ್ವತಃ ತಾವೇ ದೇವತೆಗಳಾಗಿದ್ದರಿಂದ ಮತ್ತೊಬ್ಬ ದೇವತೆಯೇ ಇರುವುದಿಲ್ಲ. ಆದ್ದರಿಂದ ದೇವತೆಗಳಿಗೆ ದೇವತೋದ್ದೇಶಕವಾದ ಹವಿಸ್ಸಿನ ತ್ಯಾಗಾದಿ ರೂಪವಾದ ಯಜ್ಞಗಳಲ್ಲಿ ಅಧಿಕಾರವನ್ನು ಹೇಳಲಾಗದು. ಋಷಿಗಳಿಗೂ ಸಹ ಯಜ್ಞಾಧಿಕಾರವಿಲ್ಲ. ಏಕೆಂದರೆ ಯಜ್ಞದಲ್ಲಿ ಋಷಿಗಳನ್ನು ವರಣ ಮಾಡಬೇಕು. (ಪ್ರಾರ್ಥನೆಯಿಂದ ಯಜ್ಞಮಾಡಲು ಆಹ್ವಾನ ಮಾಡಬೇಕು). ಆದರೆ ಭೃಗು ಮೊದಲಾದವರೇ ಸ್ವತಃ ಋಷಿಗಳಾದ್ದರಿಂದ ಅವರಿಗೆ ಮತ್ತೊಬ್ಬ ಋಷಿಗಳಿರುವುದಿಲ್ಲ. ಆದ್ದರಿಂದ ಋಷಿವರಣವೂ ಕೂಡ ಅಯುಕ್ತವಾಗುತ್ತದೆ. ಹೀಗೆ ದೇವತೆಗಳಿಗೆ ಮತ್ತು ಋಷಿಗಳಿಗೆ

ಯಜ್ಞಾದಿ ಕರ್ಮಗಳಲ್ಲಿ ಅಧಿಕಾರವಿರುವುದಿಲ್ಲ. ಆದರೆ ಬ್ರಹ್ಮವಿದ್ಯೆಯಲ್ಲಿ ಅಧಿಕಾರವನ್ನು ಹೇಳಬಹುದು.

**तन्न । देवतानामपि ''यज्ञेन यज्ञमयजन्त देवाः'' इति ''देवा वै सत्रमासत'' इति ''देवा यज्ञमतन्वत'' इति ''देवा वै चतुर्होतृभिर्यज्ञमतन्वत'' इति ''यद्विश्वदेवाः समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वम्'' इति ''प्रजापतिर्वा एतेनाग्रेऽयजत'' इति ''इन्द्रोऽश्वमेधाञ्शतमिष्ट्वा'' इति ''देवा वै वरुणमयाजयन्'' इत्यादिश्रुतिभिः,**

ಇದು ತಪ್ಪು. ದೇವತೆಗಳಿಗೂ ಕೂಡ ಯಜ್ಞದಲ್ಲಿ ಅಧಿಕಾರವಿದೆಯೆನ್ನಲು ಅನೇಕ ಶ್ರುತಿಗಳು ಪ್ರಮಾಣವಾಗಿವೆ. ಪುರುಷಸೂಕ್ತದಲ್ಲಿ 'ಯಜ್ಞೇನ ಯಜ್ಞಮಯಜಂತ ದೇವಾಃ' ಎಂಬುದಾಗಿ ಯಜ್ಞನಾಮಕ ಪರಮಾತ್ಮನನ್ನು ಯಜ್ಞದಿಂದ ದೇವತೆಗಳು ಹೋಮಿಸಿದರು ಎಂದು ಹೇಳಲಾಗಿದೆ. ಮತ್ತು 'ದೇವಾ ವೈ ಸತ್ರಮಾಸತ' ಎಂಬುದಾಗಿ ಯರ್ಜುವೇದದಲ್ಲಿ ದೇವತೆಗಳು ಯಾಗವನ್ನು ಆಚರಣೆ ಮಾಡಿದ್ದರ ವರ್ಣನೆಯಿದೆ. 'ದೇವಾ ಯಜ್ಞಮತನ್ವತ' ಎಂಬ ದೇವತೆಗಳು ಹೋಮಿಸಿದರೆಂದು ಹೇಳುವ ಪುರುಷಸೂಕ್ತವು ಪುನಃ ಅದನ್ನೇ ವರ್ಣಿಸಿದೆ. 'ದೇವಾ ವೈ ಚತುರ್ಹೋತೃಭಿರ್ಯಜ್ಞಮತನ್ವತ' ಎಂದು ಪುನಃ ತೈತ್ತಿರೀಯ ಉಪನಿಷತ್ತು ನಾಲ್ಕು ಮಂದಿ ಹೋತೃಗಳಿಂದ ದೇವತೆಗಳು ಹೋಮಿಸಿದರೆಂದು ಹೇಳಿದೆ. 'ಯದ್ವಿಶ್ವೇದೇವಾಃ ಸಮಯಜಂತ ತದ್ವೈಶ್ವದೇವಸ್ಯ ವೈಶ್ವದೇವತ್ವಮ್' ಎಂಬುದಾಗಿ ಸಕಲ ದೇವತೆಗಳು ವೈಶ್ವದೇವನಾಮಕವಾದ ಹೋಮವನ್ನು ಆಚರಣೆ ಮಾಡಿದರೆಂಬ ಉಲ್ಲೇಖವಿದೆ. 'ಪ್ರಜಾಪತಿರ್ವಾ ಏತೇನಾಗ್ರೇಽಯಜತ' ಬ್ರಹ್ಮದೇವರು ಹೋಮ ಮಾಡಿದ್ದರೆಂದು ಈ ಶ್ರುತಿಯು ಹೇಳಿದೆ. 'ಇಂದ್ರೋಽಶ್ವಮೇಧಾನ್ ಶತಮಿಷ್ಟ್ವಾ' ಎಂಬ ಶ್ರುತಿಯು ನೂರು ಅಶ್ವಮೇಧಯಾಗಗಳನ್ನು ಇಂದ್ರನು ಮಾಡಿದನೆಂದು ಹೇಳಿದೆ. 'ದೇವಾ ವೈ ವರುಣಮಯಾಜಯನ್' 'ದೇವತೆಗಳು ವರುಣನನ್ನು ಯಾಗ ಮಾಡಿಸಿದರು' ಇವೇ ಮೊದಲಾದ ಶ್ರುತಿಗಳು ಸ್ಪಷ್ಟವಾಗಿ ದೇವತೆಗಳ ಯಜ್ಞಾಧಿಕಾರವನ್ನು ಸಮರ್ಥಿಸುತ್ತಿವೆ.

**'ततस्तु देवताः सर्वा ब्रह्मा चैव महर्षयः ।**
**वेददृष्टेन विधिना वैष्णवं क्रतुमाहरन् ॥'**

**इत्यादिभारतादिवचनैश्च देवानामपि यज्ञादिसद्भावात् । शूद्रवच्च तेषामधिकार-निषेधाभावात् ।**

ತತಸ್ತು ದೇವತಾಃ ಸರ್ವಾ ಬ್ರಹ್ಮಾ ಚೈವ ಮಹರ್ಷಯಃ ।
ವೇದದೃಷ್ಟೇನ ವಿಧಿನಾ ವೈಷ್ಣವಂ ಕ್ರತುಮಾಹರನ್ ॥
ದೇವತಾಧಿಕರಣ (೧-೩-೮)

ಸಕಲ ದೇವತೆಗಳು, ಬ್ರಹ್ಮದೇವರು ಮತ್ತು ಮಹರ್ಷಿಗಳು ವಿಷ್ಣುವನ್ನು ಕುರಿತು ವೇದೋಕ್ತ ವಿಧಿಯಿಂದ ಹೋಮವನ್ನು ಆಚರಣೆ ಮಾಡಿದರು ಎಂಬುದಾಗಿ ಮಹಾಭಾರತದಲ್ಲಿ ವರ್ಣಿಸಲಾಗಿದೆ. ಇದರಿಂದಲೂ ದೇವತೆಗಳಿಗೆ ಯಜ್ಞಾದಿ ಕ್ರಿಯೆಗಳಲ್ಲಿ ಅಧಿಕಾರವಿದೆಯೆಂದು ಸ್ಪಷ್ಟವಾಗುತ್ತದೆ.

ಮತ್ತು ಶೂದ್ರಾದಿಗಳಿಗೆ ಹೇಗೆ ಯಜ್ಞಾಧಿಕಾರವಿಲ್ಲವೆಂಬ ನಿಷೇಧ ಮಾತುಗಳಿವೆಯೋ, ಅದರಂತೆ ದೇವತೆಗಳಲ್ಲಿ ಅಂತಹ ನಿಷೇಧ ಮಾತುಗಳು ಕಾಣಿಸುವುದಿಲ್ಲ.

**देवताकर्तृकयज्ञेषु च -**

**यो मे यथा कल्पितवान्भागमस्मिन्महाक्रतौ ।**
**स तथा यज्ञभागार्हो वेदसूत्रे मया कृतः ।**
**मामेव यजतां शक्रः पावयिष्यामि वज्रिणम् ।।**

**इति भारते देवादीन्प्रति भगवद्वचनादिभिरग्नीन्द्रादिशब्दमुख्यार्थो भगवानेवो-द्देश्यः ।**

ಹಾಗಾದರೆ ದೇವತೆಗಳಿಗೆ ಮತ್ತೊಬ್ಬ ದೇವತೆಗಳಿಲ್ಲದ ಕಾರಣ ಹೇಗೆ ದೇವತೋದ್ದೇಶಕವಾದ ಯಾಗವನ್ನು ಮಾಡುತ್ತಾರೆ ಎಂಬ ಪ್ರಶ್ನೆಗೆ ಹೀಗೆ ಉತ್ತರಿಸಬೇಕು. ದೇವತೆಗಳು ಮಾಡುವಂತಹ ಯಾಗದಲ್ಲಿ ವಿಷ್ಣುವೇ ಉದ್ದೇಶ್ಯನಾಗಿರುತ್ತಾನೆ. ಈ ವಿಷಯದಲ್ಲಿ ಮಹಾಭಾರತದ ಮಾತು ಆಧಾರವಾಗಿದೆ.

ಯೋ ಮೇ ಯಥಾ ಕಲ್ಪಿತವಾನ್ ಭಾಗಮಸ್ಮಿನ್ ಮಹಾಕ್ರತೌ ।
ಸ ತಥಾ ಯಜ್ಞಭಾಗಾರ್ಹೋ ವೇದಸೂತ್ರೇ ಮಯಾ ಕೃತಃ ।
ಮಾಮೇವ ಯಜತಾಂ ಶಕ್ರಃ ಪಾವಯಿಷ್ಯಾಮಿ ವಜ್ರಿಣಮ್ ॥

ಯಾವ ದೇವತೆಯು ಈ ಮಹಾಕ್ರತುವಿನಲ್ಲಿ ದೊಡ್ಡಭಾಗವನ್ನು ನನಗಾಗಿ ಸಮರ್ಪಣೆ ಮಾಡುತ್ತಾನೋ, ಅಂತಹ ದೇವತೆಯೂ ಸಹ ಯಜ್ಞಭಾಗದಲ್ಲಿ ಅರ್ಹನಾಗುತ್ತಾನೆ. ಈ ವಿಷಯವನ್ನು ವೇದಾರ್ಥನಿರ್ಣಾಯಕವಾದ ಬ್ರಹ್ಮಸೂತ್ರಗಳಲ್ಲಿ ನಾನು ನಿರ್ಣಯಿಸಿದ್ದೇನೆ, ನನ್ನನ್ನು ಕುರಿತು ಯಾವ ದೇವೇಂದ್ರನು ಹೋಮವನ್ನು ಮಾಡುತ್ತಾನೋ, ಅವನನ್ನು ನಾನು ಪವಿತ್ರ ಮಾಡುತ್ತೇನೆ ಎಂದು.

ಹೀಗೆ ದೇವತೆಗಳನ್ನು ಕುರಿತು ಭಗವಂತನು ಹೇಳುವ ಮಾತು. ಆದ್ದರಿಂದ ಇಂದ್ರಾದಿ ಶಬ್ದಗಳಿಂದ ಮುಖ್ಯವಾಗಿ ಪ್ರತಿಪಾದ್ಯನಾದವನು ಭಗವಂತನೇ ಆಗಿದ್ದಾನೆ.

**अत एव ''इन्द्रो वा अकामयत ज्यैष्ठ्यं देवानामभिजयेयमिति । स एतमिन्द्राय ज्येष्ठाय पुरोडाशमेकादशकपालं निरवपत्'' इत्यादिश्रुतयः ।**

ಆದ್ದರಿಂದಲೇ 'ಇಂದ್ರೋ ವಾ ಅಕಾಮಯತ ಜ್ಯೇಷ್ಠ್ಯಂ ದೇವಾನಾಮಭಿಜಯೇಯಮಿತಿ । ಸ ಏತಮಿಂದ್ರಾಯ ಜ್ಯೇಷ್ಠಾಯ ಪುರೋಡಾಶಮೇಕಾದಶಕಪಾಲಂ ನಿರವಪತ್' ಇಂದ್ರನು ಇಂದ್ರನಾಮಕನಾದ ಪರಮಾತ್ಮನನ್ನು ಕುರಿತು ಹೋಮವನ್ನು ಆಚರಣೆ ಮಾಡಿ, ಎಲ್ಲರನ್ನು ಗೆಲ್ಲಲು ಉದ್ಯುಕ್ತನಾದನು. ಇತ್ಯಾದಿ ಶ್ರುತಿಗಳು ಈ ವಿಷಯದಲ್ಲಿ ಆಧಾರವಾಗಿವೆ.

**भृग्वादिवरणं च मनुष्यविषयम् । यद्वा अनादौ संसारे पूर्वपूर्वभृग्वादिवरणमुत्तरोत्तरेषां युक्तम् ।**

ಹಿಂದೆ ಋಷಿಗಳಿಗೆ ವರಣವು ಹೇಗೆ ಯುಕ್ತವಾಗುತ್ತದೆಂದು ಪ್ರಶ್ನಿಸಲಾಗಿತ್ತು ? ಅದೂ ಸಹ ತಪ್ಪು. ಏಕೆಂದರೆ ಭೃಗು ಮೊದಲಾದವರು ವರಣವನ್ನು ಮಾಡುತ್ತಾರೆ ಎಂಬ ಮಾತುಗಳು ಮನುಷ್ಯ ವಿಷಯಕವಾಗಿದೆಯೆಂದು ಅರ್ಥೈಸಬೇಕು. ಅಥವಾ ಅನಾದಿಯಾದ ಸಂಸಾರದಲ್ಲಿ ಮುಂದಿನ-ಮುಂದಿನ ಭೃಗು ಮೊದಲಾದ ಋಷಿಗಳನ್ನು ಹಿಂದಿನ ಭೃಗು ಮೊದಲಾದ ಋಷಿಗಳು ವರಣವನ್ನು ಮಾಡುತ್ತಾರೆ ಎಂದೂ ಸಹ ಅರ್ಥೈಸಬಹುದು.

**प्रकाशः –**

अद्वैत्युक्तमन्यदपि निराह – **यच्चेति** ।। पूर्वतन्त्रे हि षष्ठस्याद्यपादे ''फलार्थत्वात्कर्मणश्शास्त्रं सर्वाधिकारं स्यात्'' इति द्वितीयेऽधिकरणे देवर्ष्यादीनामधिकारोऽस्ति न वेति विशये फलार्थित्वादिनाऽधिकारोऽस्तीति प्राप्ते

ವಿವರಣೆ - ಅದ್ವೈತಿಗಳ ಎರಡನೆಯ ಸೂತ್ರವ್ಯಾಖ್ಯಾನವನ್ನೂ ಕೂಡ 'ಯಚ್ಚ' ಇತ್ಯಾದಿ ಗ್ರಂಥದಿಂದ ನಿರಾಕರಣೆ ಮಾಡುತ್ತಿದ್ದಾರೆ. ದೇವತೆಗಳಿಗೆ ಯಾಗಾದಿಕರ್ಮಗಳಲ್ಲಿ ಅಧಿಕಾರವಿಲ್ಲವೆನ್ನಲು ಪೂರ್ವಮೀಮಾಂಸೆಯ ದೃಷ್ಟಾಂತ ಹೀಗಿದೆ -

ಫಲಾರ್ಥತ್ವಾತ್ ಕರ್ಮಣಃ ಶಾಸ್ತ್ರಂ ಸರ್ವಾಧಿಕಾರಂ ಸ್ಯಾತ್[1] (೬-೧-೦೨)

---

(१) भाट्टसङ्ग्रहः –

अथ द्वितीयं यागादिषु मनुष्यस्यैवाधिकाराधिकरणम् (सूत्रे ४-५)

फलार्थत्वात्तु कर्मणः शास्त्रं सर्वाधिकारं स्यात् ॥४॥

(कर्तुर्वा श्रुतिसंयोगाद्विधिः कार्त्स्न्येन गम्यते ॥५॥)

एवं सामान्यतः सिद्धेऽधिकारेऽत्र विशेषचिन्तनात्सङ्गतिः । प्रागुक्तोऽधिकारो किमनुष्ठानाशक्तानामन्धबधिरमूकपङ्गुदेवर्षितिरश्चामपि, किं वा समर्थानां मनुष्याणामेवेति सन्देहः ।

